च॰ व्यू॰ ॥श्रीगणेशाय नमः॥ अथातश्चरणव्यूहं व्याख्यास्यामस्तत्र यदुक्तं चातुर्वेद्यं चत्वारो वेदा विज्ञाता भव
१ न्ति तत्र ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्चेति तत्र ऋग्वेदस्याष्टौ भेदा भवन्ति चर्चा श्रावकश्चर्चकः श्रवणी
यपारः क्रमपारः क्रमपदः क्रमजटः क्रमदंडश्चेति चतुष्पारायणमेतेषां शाखाः पञ्च भवंत्याश्वलायनी शांखा
यनी शाकला बाष्कला मांडूकाश्चेति तेषामध्ययनमध्यायाश्चतुःषष्टिर्मण्डलानि दशैव तु॥ वर्गाणां परि
संख्यानं द्वे सहस्रे षडुत्तरे॥२००६ सहस्रमेकं सूक्तानां निर्विशंकं विकल्पितम्॥ दशसप्तसुपञ्चाने संख्या
तं वै पदक्रमम्॥ एकशतसहस्रं वा द्वित्रिपंचाशत्सहस्राद्वैमतानि चतुर्दशवासिष्ठानामितरेषां पञ्चाशी
तिः क्रमकाले तु वेष्टव्यं चतुस्त्रिंशत्सहस्राणि तु द्विखंडानां सहस्राणां द्वात्रिंशत् षोडशोत्तरा॥ चत्वारि
शत्सहस्राणि द्वात्रिंशतत्वाक्षरसहस्राणि ऋचान्दशसहस्राणि ऋचां पञ्चशतानि च॥१०५८०॥ ऋचा
मशीतिपादश्च तत्पारायणमुच्यते॥ एकर्चे एकवर्गश्च एकश्च नवकस्तथा॥ द्वौ वर्गौ तु द्व्यृचौ ज्ञेयौ ऋकत्रय
स्य शतं स्मृतम्॥१००० चतुर्ऋचां पंच सप्तसप्तधिकं च शतं तथा॥१७५ पंचर्चं ५ चद्विशद्युक्तं सहस्रं रुद्रसंयु
तम्॥१२११० पंचचत्वार्यधिकं तु षड्टचां च शतत्रयम्॥३४५॥ सप्तर्चस्य शतं ज्ञेयं विंशतिश्चाधिकास्मृता राम
१२०॥ अष्टऋचां तु पंचाशत्स्यात्त्वाधिकं तथैव च ५५ दशाधिकद्विसहस्रपञ्चशाखासु निश्चिता॥ वर्गाः सं १
ज्ञानसूक्तस्य चत्वारश्चात्र मीलिताः॥ एवं पारायणे प्रोक्ता ऋचा संख्यमनन्यूनतः १७० मित्येकास्संख्यास्तनार

बिंदुकलात्मकम् ॥ त्रिदेवत्वं त्रिमात्रं च स्फुटं विष्णुं सनातनम् ॥ तं सर्वज्ञं जगत्सेतुं परमात्मानमीश्वरम् वंदे नारायणं देवं निरवद्यं निरंजनम् ॥ कृष्णद्वैपायनं वन्दे गुरुं वेदमहानिधिम् ॥ येन चरणव्यूहेषु प्रख्यातो वेदमितं कृतम् ॥ तच्छिष्यं शौनकं गुरुं वेदज्ञं लोकविश्रुतम् ॥ नत्वा तु शाकलाचार्यं तथैवं चाश्वलायनम् ॥ एवं परंपराप्राप्तं बालकृष्णं महागुरुम् ॥ यस्य प्रसादाद्व्याख्यामि चरणव्यूहसंज्ञकम् ॥ अथातश्चरणव्यूहं व्याख्यास्यामः ॥ अथशब्दो मंगलप्रस्तावे च ॥ अथशब्दः पूर्वमेव मंगलार्थ इत्यर्थः ॥ अतः हेत्वर्थः ॥ चरणव्यूहः ॥ वेदराशेश्चतुर्विभागात् चरण उच्यते ॥ तस्य व्यूहः समुदायः ॥ चतुर्वेदानां समुदायस्तं व्याख्यास्याम इत्यर्थः ॥ कथमेकवेदः ॥ तदुक्तमारण्यके ॥ सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राणऋच इत्येवं विद्यादिति ॥ तस्य चतुर्विभागाः कृताः ॥ तथा चोक्तं भागवते दशमस्कंधे षष्ठाध्याये ॥ तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैः प्रभुः ॥ सव्याहृतिकान्सोंकारांश्चतुर्होत्रविचक्षणः ॥ पुत्रानध्यापयामास ब्रह्मर्षीन् ब्रह्मकोविदान् ॥ ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥ ते परंपरया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ॥ चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥ क्षीणायुःक्षीणसत्वश्च दुर्मेधा वीक्ष्य कालतः ॥ वेदान् ब्रह्मर्षयो व्यस्तान् हृदिस्थाच्युतनोदिनः ॥ अस्मिन्नप्यन्तरे ब्रह्मन् भगवाँल्लोकभावनः ॥ ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ पराशरात्सत्यवत्यामंशांशकलया विभुः ॥ अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥ ऋगथर्वयजुःसाम्नां राशीरुद्धृत्य वर्गशः ॥ चतस्रः संहि

च॰ व्यू॰ नाम्नैकेसूत्रेमणिगणाइव॥मन्त्रेमणिगणाइवेतिपाठान्तरम॥तासांसचतुरःशिष्यानुपहूयमहामतिः॥एकै
२ कसंहितांब्रह्मन्नेकैकस्मैददौविभुः॥पैलायसंहितामाद्यांबह्वृचाख्यामुवाचह॥वैशंपायनसंज्ञायनिगदाख्यं
यजुर्गणम्॥साम्नांजैमिनयेप्राहतथाच्छन्दोगसंहिताम्॥अथर्वांगिरसोनामस्वशिष्यायसुमंतवइति॥पैलःस्व
संहितामूचइन्द्रप्रमितयेमुनिः॥बाष्कलायचसोप्याहशिष्येभ्यःसंहितांस्वकाम्॥चतुर्धाव्यस्यबोध्याययाज्ञ
वल्क्यायभार्गवे॥पाराशर्यायाग्निमित्रइन्द्रप्रमितिरात्मवान्॥अध्यापयत्संहितांस्तांमांडूकेयमृषिंकविं॥त
च्छिष्योदेवमित्रश्चसौभर्गादिभ्यऊचवान्॥इन्द्रप्रमितिसुतोमांडूकेयः॥मांडूकेयसुतःशाकल्यः॥शाकल्यशि
ष्योदेवमित्रः॥शाकल्यस्तत्सुतःस्वांतुपंचधाव्यस्यसंहिताम्॥वात्स्यमुद्गलशारीरगोखल्यःशिशिरेष्वधात्।जा
तूकर्ण्यश्चतच्छिष्यस्सनिरुक्तांस्वसंहिताम्॥बालायपैंग्यवैतालविरजेभ्योददौमुनिः॥बाष्कलिःप्रतिशाखाभ्योवा
लखिल्याख्यसंहिताम्॥चक्रेबालायनिर्भज्यकाशीरश्चैवतांदधुः॥बह्वृचःसंहिताह्येताएतैर्ब्रह्मर्षिभिर्धृताः
॥श्रुत्वैवंछन्दसांव्यासंसर्वपापैःप्रमुच्यतइति॥अस्यार्थः॥व्यासात्पैलःसंहितांपदक्रमंचत्रिविधरूपंपठित्वा
इंद्रप्रमितयेददौ॥इन्द्रप्रमितिःचतुर्धाजटान्तंव्यासंकृत्वाबाष्कलादिआग्निप्रमित्रेतेषट्शिष्येभ्यःस्वसुतमांडू
केयायददौ॥शाकल्यःसंहितापदक्रमजटादंडरूपंचपंचधाव्यासंकृत्वावात्स्यमुद्गलशारीरगोखल्यशिशि राम
रेभ्यःददौ॥इतिपदेषुसंहितात्वइतिकरणवेष्टनेउदात्तस्वरितस्वराणांसिद्धिः॥एतच्छन्दसांव्यासविस्तारंश्रुत्वा २

सर्वपापैः प्रमुच्यत इत्यर्थः॥ तथा च विष्णुपुराणे॥ ब्रह्मणा चोदितो व्यासो वेदान्व्यस्तुं प्रचक्रमे॥ अथ शिष्यान्स
जग्राह चतुरो वेदपारगान्॥ ऋग्वेदश्रावकं पैलं संजग्राह महामतिः॥ वैशंपायननामानं यजुर्वेदस्य चाग्रहीत्
॥ जैमिनिं सामवेदस्य तथैवाथर्व वेदवित्॥ सुमन्तुस्तस्य शिष्योऽभूद्वेदव्यासस्य धीमतः॥ तथा च गृह्यसूत्र
म्॥ सुमन्तुजैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्या इति॥ जानन्तिबाहवि इत्यारभ्य मां
डूकेय इत्यन्तं माण्डूकगणसमुदायः॥ गार्गीवाचक्नवीत्यारभ्य शांखायनमित्यन्तेन शांखायनगणः॥ एतेषां कौ
षीतकि ब्राह्मणं आरण्यकं च॥ ऐतरेय इत्यारभ्य आश्वलायनान्ता आश्वलायनगणः॥ एतेषां ऐतरेयब्राह्मणं
आरण्यकं आश्वलायनसूत्रमित्यर्थः॥ ॥ तत्र यदुक्तं चातुर्वैद्यं चत्वारो वेदा विज्ञाता भवन्ति॥ अस्मिन्ग्रन्थे यदु
क्तं चातुर्वैद्येन न चत्वारो वेदा विज्ञाता भवन्ति॥ ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्चेति॥ इति स्पष्टार्थः॥ वेदा
हि यज्ञार्थमभिप्रवृत्ताः॥ तथा च विष्णुपुराणम्॥ आद्यो वेदश्चतुष्पादः शतसाहस्रसंमितः॥ ततो दशगुणः
कृत्स्नो यज्ञोऽयं सर्वकामधुक्॥ अत्रान्तरे तु तो व्यास अष्टाविंशतिमेन्तरे॥ वेदमेकं चतुष्पादं चतुर्धा व्यभज
त्प्रभुरिति॥ अस्यार्थः॥ आद्यो वेदः वेदविभागात्पूर्वकालीनो वेदश्चतुष्पादः ऋगादिचतुष्टयसमूहरूपः॥
शतसाहस्रसंमितः॥ दशदशतच्छतं दशशतानि तत्साहस्रं तत्सर्वमित्यादिश्रुतेः॥ अनन्तसंख्याकः॥ अन
न्ता वै वेदा इति श्रुतेः॥ ततो वेदात्प्रवृत्तः कृत्स्नोऽयं दशगुणः॥ दशविधः॥ स एष यज्ञः पंचविधोऽग्निहोत्रं दर्शपूर्ण

ऋ. ब्रा. मासो चातुर्मास्यानि पशुः सोम इति श्रुतेः ॥ तथा च पंच वा एते महायज्ञाः इत्युपक्रम्य ॥ ब्रह्मयज्ञो देवयज्ञः
३ पितृयज्ञो भूतयज्ञो मनुष्ययज्ञ इति श्रुतेश्च ॥ वैतानिका गार्ह्याश्चेत्युभये यज्ञाः ॥ अत्रान्तरे वैवस्वतमन्वन्तरे अ
ष्टाविंशतितमे द्वापरे इति शेषः ॥ सत्सु तेषु व्यासः कृष्णद्वैपायनश्चतुर्धा व्यभजत ॥ ऋग्वेदादिरूपेण चतुर्धा विभक्त
वान् ॥ पाकयज्ञाः त्रिविधाः अत्र गृह्यम् ॥ हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणि हुता
इति ॥ अत्र श्रुतिकृत ॥ हुता अग्नौ हुताः अग्नौ हूयमानाः हविष्यस्रुजुहुयादित्येवमादयो हुताः ॥ अनग्नौ क्रि
यमाणाः अथ बलिहरणमित्येवमादयः प्रहुताः ॥ ब्राह्मणभोजनं यत्रास्ति ब्राह्मणान्भोजयित्वेति ब्रह्मणि हु
ताः इति ॥ नित्याभ्यासो ब्रह्मयज्ञः पारायणं च ॥ अत्र गृह्यसूत्रम् ॥ ब्रह्मयज्ञखण्डे ॥ यदृचोधीते पय आहुतिभि
रेव तद्देवतास्तर्पयति यद्यजूंषि घृताहुतिभिर्यत्सामानि मध्वाहुतिभिर्यदथर्वाङ्गिरसः सोमाहुतिभिर्यद्ब्राह्म
णानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृताहुतिभिर्यदृचोधीते पयसः कुल्या अस्य पितृन्स्व
धा उपक्षरन्तीति ॥ तत्र ऋग्वेदस्याष्टभेदा भवन्ति ॥ स्थानानि भवन्तीति पाठान्तरम् ॥ शाकल्यबाष्कलौ ऐतरे
यब्राह्मणारण्यकौ ॥ शांखायनमाण्डूकौ कौषीतकीयब्राह्मणारण्यकाविष्टभेदाः ॥ अन्यो वेदाविकृतिशा
खाश्च भेदस्तु त्रिविधस्तथा ॥ पृथक्नानाभिधानेन व्यासेन कथितं पुरा इति ॥ अत्राष्टभेदेनाष्टौ स्थानेन वा राम
विकृतिर्ग्राह्या ॥ विकृतिस्तु अन्ते वक्ष्यामः ॥ तस्माद्ब्रह्मयज्ञार्थं पारायणार्थं च ऋग्वेदस्याध्ययनं कर्तव्यम् ॥ ३

ततश्चतुष्पदेनवक्ष्यतिचर्चाश्रावकश्चर्चकःश्रवणीयपारइति॥चर्चाध्ययनम्॥तत्रऔणसूत्रे॥चित्रिपू
जिकथिकुंभिचर्चश्च॥एभ्योऽङ्स्त्रियाभावादौ॥चितिस्मृत्याम्॥पूजिपूजायाम्॥कथवाक्यप्रबन्धे॥
कुम्बिआच्छादने॥चर्चअध्ययने॥चुरादयइति॥अष्टाध्यायसूत्रे॥ताल्वोष्ठपुठव्यापारेणशब्दस्यश्रव
णंक्रियतेसाचर्चा॥तदध्ययनस्यश्रावकोगुरुः॥तस्यचर्चकःशिष्यः॥श्रवणीयपारःश्रवणीयोवेदःत
स्यपारःसमाप्तिः॥इतिचतुष्पदेनअध्ययनंसूचितम्॥अग्रेचतुष्पदेनचत्वारिपारायणानिसूचयति॥त
त्पारायणंद्विविधम्॥प्रकृतिविकृतिरूपम्॥काप्रकृतिःकाविकृतिः॥प्रकृतिःसंहिता॥साद्विविधा॥रू
ढायोगरूढायथा॥अग्निमीलेपुरोहितमिति॥योगायथा॥अग्निमीले॥ईलेपुरोहितमितिप्रातिशा
ख्येद्वितीयपटलेभाष्यकारेणव्याख्यातम्॥अथचतुष्पारायणंयथा॥क्रमपारःक्रमपदःक्रमजटःक्र
मदंडश्चेतिचतुष्पारायणम्॥क्रमशब्दउभयसंहितावाच्यः॥सकथम्॥अनुलोमविलोमाभ्यांत्रिवारं
हिपठेत्क्रमम्॥विलोमेपदवत्संधिरनुलोमेयथाक्रमम्॥यथाक्रमंयथासंहिताइत्यर्थः॥अन्यच्च॥वर्णक्र
मःअक्षरसमाम्नायएवेत्यारण्यके॥कथमभिष्टुयादित्यक्षरशः॥चतुरक्षरशः॥पदशः॥अर्धर्चशः॥ऋ
क्शः॥इतिब्राह्मणम्॥भूयांसितुसमाम्नानाद्व्यंजनमात्रंतुतत्तस्याभिधानस्यभवतीतिनैरुक्ताः॥क्रमः
संहितावाचिकथम्॥पदप्रकृतिःसंहिताइतिनैरुक्तवचनात्॥साक्रमरूपाइत्यर्थः॥क्रमपदःक्रमःसंहि

तानस्याः पदानि॥इतिह्ये प्रकृतिपारायणेद्वे विकृतिरूपे॥विकृतिअष्टविधाभवति॥तच्च॥जटामालाशि
व॰ सू॰ ४ खालेखाध्वजोदंडोरथोघनः॥अष्टौविकृतयःप्रोक्ताःक्रमपूर्वामहर्षिभिरिति॥आसांमध्येजटादंडयोःप्राधा
न्यम्॥तत्कथम्॥जटानुसारिणीशिखा॥दंडानुसारिणीमाला॥लेखाध्वजोरथश्च॥घनस्तूभयानुसारि
त्वात्॥अस्याःनियमवाक्यानिव्यालीकृतजटापटलेउदाहरणानिच॥तत्रजटावाक्यम्॥क्रमेयथोक्तेपदजा
तमेवद्विरभ्यसेदुत्तरमेवपूर्वम्॥अभ्यस्यपूर्वञ्चतथोत्तरेपदेऽवसानमेवंहिजटाभिधीयते॥अस्यार्थः॥
क्रमेयथोक्तेसतिक्रमोदाध्यामित्याद्युक्तेक्रमप्रकारेपदजातंपदद्वयंवापदत्रयंवाद्विरभ्यसेत्॥द्विवारप
ठेत्॥अभ्यासप्रकारः॥उत्तरमेवपूर्वम्॥क्रमवत्पदद्वयंगृहीत्वापूर्वेनामप्रथमंउत्तरपदमभ्यसेत्॥ततःउत्तर
पूर्वपदयोःसंधानद्वारापूर्वे २ द्विरभ्यस्योत्तरपदेअवसानंएवंप्रकारेणअध्ययनंजटाऽभिधीयतेकथ्यते॥हीति
निष्कर्षार्थम्॥उदाहरणेनदर्श्यते॥अग्निमीलेईलेग्निमग्निमीले॥ईलेपुरोहितंपुरोहितंपुरोहितमीलईले
पुरोहितमित्यादिज्ञेयम्॥अथदण्डलक्षणम्॥क्रमस्युत्क्रमविपर्यस्यपुनश्चक्रमप्रुत्तरम्॥अर्धर्चादेवमु
क्तोक्तःक्रमदंडोभिधीयते॥उदाहरणम्॥अग्निमीले।ईलेग्निं॥अग्निमीलेईलेपुरोहितम्॥पुरोहितमीलेग्नि राम
मित्यादिज्ञेयम्॥अथमालालक्षणम्॥ब्रूयात्क्रमविपर्यासावर्धर्चस्यादितोन्ततः॥अन्तंचादिनयेदेवंक्रममाले ४
तिगीयते॥मालामालेवपुष्पाणांपदानांग्रन्थिरीहिता॥आवर्त्तनेत्रयस्तस्यांक्रमव्युत्क्रमसंक्रमाः॥अथशिखा

लक्षणम् ॥ परोत्तरं जटामेव शिखामार्याः प्रचक्षते ॥ अथ लेखालक्षणम् ॥ ॥ क्रमाद्द्वित्रिचतुःपंचपदक्रम
मुदाहरेत् ॥ पृथक् पृथक् विपर्यस्य लेखामाहुः पुनः क्रमात् ॥ ॥ अथ ध्वजलक्षणम् ॥ श्रुत्यादेः क्रमं सम्य
ग् न्तादुत्तारयेद्यदि ॥ वर्गो वाक्रचिवा यत्र पठनं स ध्वजः स्मृतः ६ अथ रथलक्षणम् ॥ पादशोर्धर्चशो वापि स
होक्त्या दंडवद्रथः ७ अथ घनलक्षणम् ॥ जटामुक्त्वा विपर्यस्य घनमाहुर्मनीषिणः ८ अन्यच्च ॥ जटाशिखा
घनः प्रोक्ताक्रमपूर्वा मनीषिभिः ९ इति विकृतिलक्षणान्युक्तानि अध्ययने ॥ संहितापारायणम् ॥ पदपारा
यणम् ॥ जटापारायणम् ॥ क्रमदंडपारायणं च ॥ चतुष्पारायणमित्यर्थः ॥ एतेषां शाखाः पंच भवंति ॥ एतेषां वे
दपाराणानां पञ्च शाखा भवंतीत्यर्थः ॥ ॥ ता: का: ॥ आश्वलायनी शांखायनी शाकला बाष्कला माण्डूकाश्चे
ति ॥ इति प्रसिद्धाः ॥ तेषामध्ययनम् ॥ तेषां आश्वलायनी यादि शाखानां समानाध्ययनं सूचयति ॥ अध्यायाः
श्चतुःषष्टिः ॥ अग्निमीळे ॥ अयं देवाय इत्यादि ६४ चतुःषष्टिरध्याया इत्यर्थः ॥ मंडलानि दशैव तु ॥ अग्निमीळेकु
षुंभक इत्यादि उपाकर्मणि प्रसिद्धानीत्यर्थः ॥ वर्गाणां परिसंख्यातं द्वे सहस्रे षडुत्तरे ॥ वर्गादि आकृचानाः सं
ख्या वालखिल्यैर्विना ज्ञेया ॥ षडुत्तरसहस्रद्वयवर्गा इत्यर्थः ॥ सहस्रमेकं सूक्तानां निविशंकं विकल्पितम् ॥
दशसप्ततु पर्यन्ते ॥ सप्तदशाधिकसहस्रं सूक्तानीत्यर्थः ॥ संख्यातं वै पदक्रमं एकशतसहस्रं वा द्विपंचाश
त्सहस्रार्धमेतानि चतुर्दशावासिष्ठानामितरेषां पंचाशीतिः ॥ एकलक्षद्विपञ्चाशत्सहस्रपंचशतचतुर्द

च॰ व्यू॰ ५ शवासिष्ठानाम् १५२५१४॥ वासिष्ठगोत्रीयाणां इन्द्रोतिभिरेकसप्तत्रिपदात्मिको वर्गो नास्ति॥ इतरगोत्री
याणां पंचाशीत्यधिकपदानीत्यर्थः ८५ अथ वालखिल्यसहितापदसंख्या उच्यते॥ लक्षैकं तु त्रिपंचाश
त्सहस्रं शतसप्तकम्॥ पदानि च द्विनवतिः प्रमाणं शाकलस्य च १ एकलक्षत्रिपंचाशत्सहस्रसप्तशतद्वि
नवतिसंख्याधिकानि पदानीत्यर्थः १५३७९२ पदानि वालखिल्यस्य अर्कसंख्याशतानि च॥ अधिकानि तु
सप्तैव १२०७ वर्गा अष्टादश स्मृताः॥ सप्ताधिकद्वादशशतानि पदानीत्यर्थः १२०७ इत्याश्वलायनानाम्॥
शांखायनानां तु वालखिल्यसहितपदसंख्या उच्यते॥ शाकल्यदृष्टे पदलक्षमेकं सार्द्धं तु वेदे त्रिसहस्रयु
क्तम्॥ शतानि सप्तैव तथाऽधिकानि चत्वारि त्रिंशच्च पदानि च च॥ शाकल्यो माण्डूकगणस्य॥ संहितापदा
नि॥ एकलक्षत्रिपंचाशत्सहस्रसप्तशतचतुस्त्रिंशदधिकानि पदानीत्यर्थः १५३७३४ पदानि वालखिल्य
स्य रुद्रसंख्याशतानि च॥ षट्पंचाशत्त्वधिकानि वर्गाः सप्तदशास्तथा॥ एकादशशतषट्पंचाशदधिकवाल
खिल्यपदानीत्यर्थः ११५६ अष्टपंचाशत्पदात्मिका ऋक्त्रयस्य॥ यमृत्विजो वर्गो नास्ति॥ नतु हविष्यांती
यसूक्ते हि समीचीवर्गे त्रिऋचानन्तरं एक एवाग्निः ऋक्॥ यमृत्विजो ऋक्॥ खिलरूपेण पठंति॥ ज्योतिष्
मन्तमृचाभावः॥ ऋक्त्रयस्य तेषामंते पदाभावत्वात्॥ अनेन वर्गसमाप्तौ यावन्मात्रमृचं पठंति॥ एवं हि स राम
मीचीषड्ऋचो वर्गः॥ आश्वलायनानां च त्र्यृचात्मको वर्गः॥ इत्याश्वलायनशांखायनशाखयोरध्ययन ५

योभेद इत्यर्थः॥ यस्य मंत्रस्य पदाभावः तस्यैवैलिकत्वं सिद्धम्॥ नहि त्र्यम्बकं यजामहे मंत्रस्य पदाभा
वात्तस्यैवैलिकत्वं सिद्धम्॥ नहि इमानागात्॥ उपलेखायाम्॥ त्र्यम्बकं मध्यमं भद्रन्नः प्रजापतेऽकृतं चेति
पदक्रममभिमन्त्रमयाभिगीभूमितिउभयाअर्धर्चान्ते पदग्रीतम्॥ तस्मात्पदकाले क्रमकाले च पठन्ति॥ क्र
मोद्दपदशद्रनिवचनात्॥ अत्र द्वितीयपदं नास्ति॥ अर्धर्चान्तसमापनात्॥ क्रमाभावः॥ तस्मात्पदकाले क्र
मकालेपठनं स एवं पदक्रम इत्यर्थः॥ क्रमकालेतु वेष्टवं चतुस्त्रिंशत्सहस्राणि॥ षत्वेणत्वे चदीर्घत्वे आ
कारसातुनासिके॥ त्रिचतुःपञ्च क्रमे अर्धर्चान्ते च वेष्टयेत्॥ क्रमेण उदाहरणानि ज्ञातव्यानि॥ ॥सुषुमा
यानम्॥ मोषुणः॥ वाजेषुसासहिर्भव॥ ओंउपानसः॥ न्याविध्यदिलीविशस्य॥ अगादारैगुहूला॥ निरुस्व
सारमस्कृतोषसम्॥ अग्निमीले॰ ऋत्विजमित्यृत्विजमिति॥ चतुस्त्रिंशत्सहस्राणि क्रमकालेजुवेष्टनानी
त्यर्थः॥ द्विखंडानां सहस्राणां द्वात्रिंशत्षोडशोत्तरा॥ षोडशोत्तरद्वात्रिंशत्सहस्राणि द्विखंडानीत्यर्थः॥ चत्वा
रिंशतं सहस्राणि द्वात्रिंशतं चाक्षरसहस्राणि॥ चतुर्लक्ष द्वात्रिंशत्सहस्राक्षराणीत्यर्थः॥ द्वात्रिंशतं चाक्षरस
हस्राणीत्यर्थसमाप्तेः पुनर्वचनमुक्तम्॥ अथ पारायणे ऋक्परिमाणमुच्यते॥ ऋचान्दशसहस्राणि ऋचां प
ञ्चशतानि च॥ ऋचामशीतिपादश्च पारायणं प्रकीर्तितम्॥ एतत्पारायणं वालखिल्यैर्विना संख्यानम्॥ वाल
खिल्यानि पारायणे न सन्ति॥ तदुच्यते॥ ऋग्वेदान्तर्गतवालखिल्यमेकादशसूक्तम् ११ सूक्तसहस्र १०००॥

च·व्यू· समदशाधिक १०।मित्यत्रऋचान्दशसहस्राणीत्येतत्संख्याअतिरिक्तानिवालखिल्यानीतिप्रसिद्धिः॥तत्रप
६ ञ्चानुष्ठानेब्राह्मणेसूत्रेचश्रूयते॥वालखिल्याःशंसतिप्राणावैवालखिल्याइति॥अभिप्रवःसुराधसमितिष
ड्वालखिल्यानांसूक्तानामितिब्राह्मणेआरण्यके॥अथवालखिल्याविहरेत्तदृचंषोलशिनेनिसूत्रकारःश्रौ
तस्मात्तत्सर्वकर्मानुष्ठानेवालखिल्यप्रसिद्धिः॥वेदपारायणेवर्जमित्यर्थः॥शौनकाचार्यवचनात्॥यथा
प्रैषाध्यायकुन्तापाध्यायनिविदध्यायसुपर्णाध्यायइतितद्वालखिल्याध्यायइत्यर्थः॥वालखिल्यसं
हितासर्वानुक्रमणीयमंत्ररूपीऋक्संख्याउच्यते॥द्विपंचाशदधिकपंचशतदशसहस्राणीति १०५५२
वालखिल्यअतिरिक्तऋक्संख्यातु॥द्विसप्तत्यधिकचतुःशतदशसहस्राणीति १०४७२ एतत्संख्यानित्य
द्विपदानैमित्तिकद्विपदासहितंउक्ता॥हवनाध्ययनाभ्यांसमानासानित्यद्विपदा॥आसांसंख्याउपलेखाया
म्॥तत्त्व॥साधुरसिन्नतासिषक्तनउरौदेवाविद्वेषांस्ययावाजंमहिराधआवासुम्नैतैनेदेवाययायस्कामः
प्रतिनत्तोमंस्त्वाश्रधासःपितुर्नपुत्रःसनावाजेषुगावानमूर्धंपवस्वसोममन्द्यन्नितितिस्रःपरिस्रुवानोन्
भिर्येमानःप्रत्यंचमर्कमनयंत्स्तुचीभिरितिद्विपदैकपदाद्वाविंशतिस्तासांसमदशद्विपदाएकपदाःपंचेति
॥हवनाध्ययनेविपरीतासांनैमित्तिकेद्विपदा॥ताःआहवर्गरूपेण॥पश्चात्तनाष्टदशसप्तिनेदशवतेष्टदश राम
श्रीणंदशऋकःऋग्संख्यांदशवनेमपूर्वीदशागतेत्वन्नश्चत्वायंपेभवषट्प्रऋग्वैतुदशराजाराष्ट्रानांदशकर्द्दि ६

अक्षारदशबक्षुरेकोदशपरिप्रधन्व इशानन्नेसोतारोद्वादशेमानुकंचत्वार्योयाहिवनसाचत्वारीतिनैमि
त्तिकद्विपदाचत्वारिंशानरशतमिति॥हवनेएकैका॥अध्ययनेद्वेद्वे॥आसांअन्याएका॥उर्वरितासानित्य
द्विपदा॥उक्तंचपरिभाषायाम॥विंशिकाद्विपदाविराजस्तदर्धमेकपदाद्विद्विपदास्तृचःसमामनन्तिअयुक्षं
त्याद्विदेवेति॥द्विर्द्विपदास्तृचःसमामनन्ति॥यस्यसूक्तस्यहिद्विपदाःसमामनन्तितास्तृचःअध्ययनेचतुष्प
दाःकृत्वेत्यर्थः॥अयुक्चन्याद्विपदैव॥सूक्तस्याचोऽयुजोयानभवन्तितास्त्वन्यानित्याद्विपदैव॥एवंअध्य
यनेद्वावर्धर्चेकगेवप्राधान्यम्॥त्रीण्यर्धर्चायाःकथम्॥तत्रापिद्वावृचावेकाक्षचाअर्धर्चाएकाकर्तव्या॥अ
ध्ययनसंप्रदायबलात्॥अनादेशेअष्टाक्षराःपादाश्चतुष्पदाश्चर्चइतिपरिभाषायाम्॥अध्ययनेत्रीण्यर्ध
र्चेकगेवसांप्रदायोनास्ति॥आसांपरिमाणमाह॥अग्निहोतारंपञ्चसहिशधौनवलयंजायततपंच॥विश्वो
विहायास्तिस्रो यत्त्वंरथंपंचमतद्वाचेयंषलेन्द्रयाह्युपनःपंचेमान्तेचत्वारिसनोनंअभिर्वजेमिंद्रायहिद्यो
सप्त॥त्वयावयंषलवमेहएकामस्तुज्येष्ठषलूतीदेवानावजेम॥सुषुमायातंत्रीणिप्रमपूष्णश्चतुष्कमस्तुश्रौष
ट्चत्वारिंशचीभिर्नोवजेवृषनिंद्रपंचयदेवासोवजेनत्वस्यंनयमेकासखेसखायमेकाःयाकुचात्रीण्येतास्त्री
णित्रीण्यर्धर्चोंकचाहवनीयाश्चतुर्नवतिसंख्याइतित्रीण्यर्धर्चेकवृहवने॥अध्ययनेअर्धर्चद्वयेनकगेका
॥अर्धर्चेनैकैवकक्षुद्वयेकर्तव्यइत्यर्थः॥एकर्चस्यकगद्वयंविराट्छन्दोविनाकथंभवतीत्याशंक्यतत्रोच्य

च·सू· ने॥ विराट्छंदः सर्वछंदसि व्याप्तं वर्त्तते॥ उक्तं चारण्यके॥ चत्वारः पुरुषा इति बाध्वः शरीरपुरुषः छंदः पुरुषो वे
७ दपुरुषो महापुरुष इति॥ तस्योष्णिग्लोमानि त्वचं गायत्री त्रिष्टुप् मांसमनुष्टुप् स्नावान्यस्थि जगती पंक्तिर्मज्जा
प्राणो बृहतीति॥ षान्येतानि विराट्चतुर्थान्येवमु हैवैवं विदुष एतदहः सर्वैः छंदोभिः प्रतिपन्नं भवतीति॥ आप्तो भव
तीत्यर्थः॥ गायत्रीपंक्तीश्चानिषजनि गायत्रो वै पुरुषः पांक्ताः पशव इति ब्राह्मणम्॥ अत्रोदाहरणम्॥ पवस्व सोम मं
न्द्रयन्निति तिस्रो नित्य द्विपदा गायत्र्य इति सर्वानुक्रमणी॥ द्विपाद्वै पुरुषो वीर्यं त्रिष्टुप्॥ विराड्भ्यामनयोर्द्वो विंशयोर्द्वि
पद्योरयं पुरुषः॥ अत्रोदाहरणम्॥ आवां सुम्ने वरिमन्॥ मत्यं चमर्कमनयन्॥ परिस्रुवानो गिरि०॥ जगती पाद इति॥
एवं सर्वव्याप्तो भवतीत्यर्थः॥ छंदांसि जज्ञिर इति श्रुतिः॥ तथा च शतपथब्राह्मणे॥ तदाहुः किंछंदाः का देवता मे०॥
प्रतिष्ठ इति द्विपदाः छंदो विष्णुर्देवता प्रतिष्ठेति॥ यथा विष्णुः सर्वव्याप्तः तथा विराट्छंद इत्यर्थः॥ विराट्छंदस्तु चतु
ष्पदा॥ त्रीण्यर्धर्चो याः पंच पादा ऋक् कर्त्तव्येति॥ अत्र किं प्रमाणं तत्रोच्यते॥ एकपाद्भूयो द्विपदो वि चक्रमे द्विपात्त्रि
पादमभ्येति पश्चात्॥ चतुष्पादेति द्विपदामभिस्वरे संपश्यन्पंक्तीरुपतिष्ठमानः॥ एकपदा द्विपदा नित्या द्विपात्त्रिपादम
भ्येति॥ एकीभूता भवंतीत्यर्थः॥ अस्योदाहरणम्॥ अग्निं होतारं मन्ये०दस्वम्॥ यः ऊर्ध्वया०कृपा॥ अयं अर्धर्चो॥ घृतस्य
विभ्राष्टिमनु वष्टि० इति द्विपदा॥ चतुष्पदा तु॥ पश्वा न तायुं०॥ एकार्धर्चो त्रिपदा एकार्धर्चो द्विपदा एका ऋक् राम
पंचपदा अध्ययने॥ द्विर्द्विपदास्तृचः समामनंतीत्यत्र समपादग्रहणात् असमानपादा विरुद्धा न हि पंक्तिछंदो प ७

चपदाभवतितस्यद्वितीयभेदोविराट् तस्मात्पञ्चपादत्वंप्रासम्॥समपादोवाअसमपादोविराट्छंद इत्यर्थः
॥अत्रश्रुतिः॥समौचिद्धस्तौनसमंविविष्टःसंमातराचिन्नसमंदुहातइत्यनयाऋचापरिहारः॥दक्षिणवा
महस्तौसमौकार्यौत्वाआसमामात्रावित्यर्थः॥अथाध्ययनेऋक्संख्योच्यते॥षण्णवत्यधिकचतुःशतदश
सहस्राणीति १०४९६ ताःसहितनैमित्तिकद्विपदाश्चत्वारिंशोत्तरशतसहितदशसहस्राणीति १०५६६ सं
ज्ञानमुशनावदत्सूक्तस्यपञ्चदशर्चैकीकृत्यएवंपारायणेऋक्संख्या १०५८० ऋचांदशसहस्राणीतिवच
नस्यसंख्यापूर्णाभवतीत्यर्थः॥एकाउर्वरितासाभद्रन्नोअपिवातयमनःइतिपादाधिकसमनुक्रमणिकावृत्ता
वप्युक्तेः॥भद्रंपुच्छमित्सारण्यके॥अथसञ्ज्ञानसूक्तम्॥ ॥सञ्ज्ञानमुशनावदत्संज्ञानंवरुणोवदत्॥संज्ञा
नमिन्द्रश्चाग्निश्चसञ्ज्ञानंसवितावदत्॥सञ्ज्ञानंनस्वेभ्यःसञ्ज्ञानमरणेभ्यः॥संज्ञानमश्विनायुवमिहास्मा
सुनियच्छताम्॥यत्कक्षीवांसंवननंपुत्रोअंगिरसाभवत्॥तेननोद्यविश्वेदेवाःसंप्रियांसमजीजनन्॥संवो
मनांसिजानतांसमाकूतिर्मनामसि॥असौयोविमनाजनस्तंसमावर्तयामसि॥तच्छंयोरावृणीमहे०१नैहं
त्वसेनादरणंपरिवर्त्मेत्रयद्दविः॥तेनाअमित्राणांबाहूहविषाशोषयामसि॥परिवर्त्मान्येषामिन्द्रःपूषाचस
सृतुः॥तेषांवोअग्निदग्धानामग्निमूळ्हानामिन्द्रोहन्तुवरंवरम्॥एषनत्सरःपाजिनंहरिणस्यधियंयथा॥प
राअमित्राँएषत्वर्वाचीगोरूपेजतु २ साध्वराणांपतेवसोहोतर्वरेण्यक्रतो॥तुभ्यंगायत्रमृच्यते॥सोकामोअन्न

त्र·सू·
८

कामःप्रजाकामउतकश्यपः॥भूतंभविष्यत्प्रस्तौतिमहद्ब्रह्मैकमक्षरंबहुब्रह्मैकमक्षरम्॥यदक्षरंभूतकृ
तोविश्वेदेवाउपासते॥महर्षिमस्यगोप्तारंजमदग्निमकुर्वत॥जमदग्निराप्यायतेछन्दोभिश्चतुरुत्तरैः॥राज्ञः
सोमस्यभक्षेणब्रह्मणावीर्यावता॥शिवानःप्रदिशोदिशः॥सत्यानःप्रदिशोदिशः३अजोयत्तेजोददृशेशुक्रंज्यो
तिःपरोगुहा॥तदृषिःकश्यपस्तौतिसत्यंब्रह्मचराचरम्॥ध्रुवंब्रह्मचराचरम्॥आयुषंजमदग्नेःकश्यपस्य
त्र्यायुषमगस्त्यस्यत्र्यायुषम्॥यद्देवानांत्र्यायुषंतन्मेअस्तुत्र्यायुषम्॥तच्छंयोरावृणीमहे०४इतिसञ्ज्ञान
सूक्तंपंचदशर्चात्मकम्॥अस्यग्रहणेप्रमाणमाश्वलायनसूत्रम्॥तच्च॥समानीवइत्येकातच्छंयोरावृणीमह
इत्येकेति॥तथाचशाखायनस्यकौषीतकिसूत्रम्।तच्च।अथोपाकर्मौषधीनांप्रादुर्भावेहस्तेनश्रवणेनवा
अक्षतसक्तूनांधानानांचदधिघृतमिश्राणांप्रसृतेवेदेनजुहुयादितिहैकआहुःसूक्तानुवाकाद्याभिरिति
वाऽध्यायार्षेपाद्याभिरितिमांडूकेयोऽथहस्माकौषीतकिरग्निमीळेपुरोहितमित्येकाकुंभकस्तदब्रवीदा
वदंस्त्वंशकुनेभद्रमावदगृणानाजमदग्निनाधामन्नेविश्वंभुवनमधिश्रितंगन्तानोयज्ञंयज्ञियाःसुशमि
योनस्वाऽअरणःप्रतिचक्ष्वविचक्ष्वाग्नेयाहिमरुत्सखायत्तेराजंच्छ्रुतंहविरितिहचास्तच्छंयोरावृणीमहइत्ये राम
काहतशेषाद्द्विषःप्राश्नंतीति॥पंचशाखानांपारायणेनतच्छंयोरावृणीमहइत्यन्तसमाप्तिरेकवेदत्वात्॥ ८
उक्तञ्च॥सांख्याश्वलायनौचैवमांडूकोवाष्कलस्तथा॥बह्वृचाऋषयःसर्वेपंचैतेह्येकवादिनइति॥सां

ख्यानामशांखायनइति॥ अथपारायणेवर्गसंख्या उच्यते॥ एकर्चएकवर्गश्च एकर्चेनवकस्तथा॥ एकर्चे
एकवर्गःजातवेदसइत्यर्थः नवर्चेएकवर्गः॥ आपोहिष्ठेति॥ द्वौवर्गौतुद्व्यृचौज्ञेयौ॥ द्वौवर्गौद्व्यृचावित्यर्थः॥ अ
ग्नेत्वन्नोऽअन्तमः॥ आयाहिवनसासहेति॥ त्र्यृचानयस्यशतंस्मृतम्॥ तृचोवर्गःशतमित्यर्थः॥ उदुत्यंचम
सेनवमित्यादि॥ चतुर्ऋचपंचसप्तत्यधिकंचशतंतथा॥ चतुर्ऋचवर्गःपंचसप्तत्यधिकशतमित्यर्थः १७५
यदंगदाशुषेत्वमित्यादि॥ पंचर्चानुद्विशतकंसहस्रंरुद्रसंयुतम्॥ पंचर्चवर्गाःएकादशाधिकद्वादशशता
नीत्यर्थः १२११ अग्निमीळइत्यादि॥ पंचचत्वार्यधिकंतुषड्चानुशतत्रयम्॥ षड्चवर्गाःपंचचत्वारिंशत्य
धिकशतत्रयमित्यर्थः ३४५ अश्विनायज्वरीरिषइत्यादि॥ सप्तर्चानांशतंज्ञेयंविंशतिश्चाधिकास्मृता॥ सप्त
र्चवर्गाःविंशत्यधिकशतमित्यर्थः १२० यच्चिद्धिसत्यसोमपाइत्यादि॥ अष्टर्चानुपंचाशत्पंचाधिकतथैवच॥
अष्टर्चवर्गाःपंचाधिकपंचशतमित्यर्थः ५५ इन्द्रंविश्वाअवीवृधन्नित्यादि॥ दशाधिकद्विसहस्रम्॥ एवंद
शाधिकसहस्रद्वयवर्गाइत्यर्थः २०१० पंचशाखासुनिश्चिताः॥ पंचशाखानांपारायणेनिश्चयेनइत्यर्थः॥ वर्गाः
संज्ञानसूक्तस्यचत्वारश्चात्रमीलिताः॥ संज्ञानसूक्तस्यचत्वारोवर्गाश्चात्रमिलित्वादशाधिकसहस्रद्वयमि
त्यर्थः॥ एवंपारायणेप्रोक्ताऋचांसंख्येनन्यूनतः॥ एवंपूर्वोक्तप्रकारेणवर्गस्यऋक्न्यूनसंख्येनदशर्चस्यप
चऋक्त्रीण्यर्धर्चस्यऋक्कर्तव्येत्यर्थः॥ एवंचतुर्विधपारायणेविज्ञेयम्॥ समानीवइतिशाकलानांनवोरिति

च·सू· १ बाष्कलानामित्यत्रबाष्कलशाखाध्ययनमनुक्रमणिकातात्क्रमम्॥गौनमादौशिजःकुत्सःपारुच्छेपारुषेः
परः॥कुत्सादीर्घतमेत्येवंबाष्कलाध्ययनेक्रमः॥अस्यार्थः॥गौतमादौशिजःकुत्सः॥उपप्रयन्तो॥नासत्याभ्या
म्॥अग्निंहोतारम्॥इमंस्तोमम्॥वेदिषदे॥एषबाष्कलक्रमइत्यर्थः॥अत्रैवसुकेउत्तममंडलेनवकेअनु
क्रमविपर्यासः॥तच्च॥स्वादोरभक्षिसूक्तात्अभिप्रवःसुराधसमसुश्रुतमितिसूक्तद्वयंपठित्वा॥अयमाया
ह्यग्निभिरितिपठेत्॥ततःआमइवाम्यायेगोर्धयत्यनुवाकोद्वशसूक्तात्मकोशाकलस्य॥पंचदशसूक्तात्म
कोबाष्कलस्य॥तत्रोच्यते॥गोर्धयतिसूक्तानन्तरंयथामनौसांवरणौ॥यथामनौविवस्वति॥उपमन्त्वा॥
एततइन्द्र॥भूरीदिन्द्रस्य॥इत्यन्तानिपंचसूक्तानिपठित्वाआत्वागिरोरथीरिवेतिपठेयुः॥अन्तेसंसमित्सू
क्तानन्तरंपंचदशर्कवालकंसंज्ञानमुशनावदत्तच्छंयोरावृणीमहइत्यन्तेवेदसमाप्तिरितिबाष्कलशाखा
ध्ययनंएवमध्ययनाभावात्शाखाभावइत्यर्थः॥सूक्तसहस्रसप्तदशाधिकात्अष्टौसूक्तानिबाष्कलस्या
धिकानीत्यर्थः॥प्रतिते॥ध्रुवंदेवा॥यमृत्विजः॥इमानिवाभितिचत्वारिबालखिल्यसूक्तानांलोपइत्यर्थः॥ राम
॥यस्तान्नविद्वद्वेवाप्यधीतेसनाकपृष्ठंभजतेहशश्वत्॥अस्यार्थः॥यःतान्ऋगर्थविद्वेदततःहवनपा १
रायणेचअधीतेसःवेदिताध्येताचनाकपृष्ठंशश्वत्सदाभजते॥हप्रसिद्धौ॥इतोमुंलोकमेत्यततस्मान्नप्र
च्यवतेहीत्यर्थः॥ ॥अथपारायणफलंतदुक्रमारण्यके॥यद्धिसन्धिंविवर्तयतितंनिर्भुजस्यरूपमथय

त्शुद्धे अक्षरे अभिव्याहरन्तितत्प्रतृण्णस्याग्रउएवोभयमन्तरेणोभयव्याप्तंभवत्यन्नाद्यकामोनिर्भुजंब्रू
यात्स्वर्गकामःप्रतृण्णमुभयकामउभयमन्तरेणेति॥अस्यार्थः॥द्वयोःपदयोरक्षरयोर्वापिसंधिस्तस्यअ
विच्छेदाध्ययनंतन्निर्भुजंसंहितापारायणमुच्यते॥शुद्धेपदेअक्षरेवासन्धिमकुर्वन्नोच्चारणंतत्प्रतृण्ण
पदपारायणम्॥संहितापदाभ्यामुभाभ्यांव्याप्तमुभयमंतरेणक्रमपारायणमित्यर्थः॥तथाचस्मृतिस्त्रिभिःकृ
त्वास्वरास्वरंविजानातिमात्रामात्रांविभजंतेसासंहितेति॥एवमेतांसंहितांयोवेदसंधीयतेप्रजयापशुभिर्य
शसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेतीति॥तस्मात्क्रमादृतेनहिपदेसंहितादिपदस्वरश्चनसिध्यति॥
द्वेपदेसिद्धेःउत्तरारम्भःकर्त्तुंनशक्यते॥अतश्चपादार्धर्चर्क्सूक्तमित्यर्थंभगवतापाञ्चालेनस्थापितानां
पारायणाक्रमेणांक्रमपारायणमुत्तमंभवतीतिचात्रश्लोकः॥प्रगाथेनपुरादानंदृष्ट्वाक्रुद्धोमहामुनिः॥अर्थ
वत्तंक्रमंब्रूयाद्देवतायाश्चयास्मृतः॥अतोऋग्यजुषांबृंहणंपदैःस्वरैश्चाध्ययनंतथात्रिभिःअस्यार्थः॥अतो
पिअस्मादपिहेतोःक्रमःअथर्वानभवति॥क्रमेणपठित्वाऋग्वेदपारायणेऋचांबृंहणंसाधारणंभवति॥इ
दमित्थमेवपाठइति॥स्वरमात्रादिरूपेणनिश्चयोभवति॥तथायजुर्वेदपारायणेयजुषांबृंहणंनामसाधार
णंस्वरमात्रादिरूपेणइदमित्थमेवपाठइतिनिश्चयोभवतीत्यतिदेशाइत्यलंप्रपंचेन॥अथपारायणविधिः
॥अत्रादौकलशस्थापनाद्युक्तंमहार्णवे॥तीर्थेदेवालयेगेहेप्रशस्तेसुपरिष्कृते॥कलशंसुदृढंतत्रमुनिर्णिक्तं

च॰सू॰ सुभूषितम्॥पुष्पपल्लवमालाभिश्चंदनैःकुंकुमादिभिः॥मृत्तिकायवसंमिश्रैर्वेदिमध्येन्यसेत्ततः॥पंचाशद्भिः
९० कुशैःकार्योब्रह्मापश्चात्सुखस्थितः॥स्नापितःस्थापितःकुंभेचतुर्बाहुश्चतुर्मुखः॥वस्त्राजान्वाकृतिर्वेदमु
त्तराग्रैःकुशैःकृतम्॥ब्रह्मोपधानंदत्वाततःस्वस्त्ययनंपठेत्॥प्रतिष्ठांकारयेत्तस्मात्पूजाद्रव्यमथोच्यते
॥यज्ञोपवीतनैवेद्यवस्त्रचंदनकुंकुमैः॥स्रक्धूपदीपताम्बूलैरेतैश्चापिपितामहम्॥ब्रह्मजज्ञानमितिवा
गायत्र्यावाथपूजयेत्॥उपाध्यायंचसंपूज्ययथापाठंपठेत्ततः॥ततोहोमादिवक्ष्यमाणविधिनाकृत्वापठे
दित्यर्थः॥तच्चैवबौधायनः॥ ॥स्थंडिलंकल्पयित्वाग्निमुपसमाधायतत्परिस्तीर्याज्येनैताभ्योदेवताभ्योजु
होत्यग्नयेसोमायविश्वेभ्योदेवेभ्योब्रह्मणेऋषिभ्योऋग्भ्योयजुर्भ्यःसामभ्यःश्रद्धायैप्रज्ञायैमेधायैधारणायै
श्रियैह्रियैसावित्र्यैसवित्रेप्रजापतयेकाण्डऋषयेअग्नयेकाण्डऋषयेविश्वेभ्योदेवेभ्यःकाण्डऋषिभ्यःसां
हितीभ्योदेवताभ्यउपनिषद्भ्योयाज्ञिकीभ्योदेवताभ्यउपनिषद्भ्योवारुणीदेवताभ्यउपनिषद्भ्योहव्यवाहाय
विश्वेभ्योवरुणेभ्यः॥तमग्नेस्विष्टकृतेचपृथक्स्वाहाकारेणहुत्वाथाहुतिभिस्तुहुत्वापुनःपरिषिंचतिस
मासेचैतायजुषानपयनिएवम्ऋग्वेदस्यकाण्डऋष्यादिवर्जमास्विष्टकृतस्तथास्थानेशतर्चिभ्योमाध्यमेभ्यो
गृत्समदायविश्वामित्रायवामदेवायात्रयेभरद्वाजायजामदग्न्यायगोतमायवसिष्ठायप्रगाथेभ्यःपावमा राम
नीभ्यःक्षुद्रसूक्तेभ्योमहासूक्तेभ्योमहानाम्नीभ्यइतिततोवेदादिमारभ्यसन्ततमधीयीतेत्याहभगवान्बौ ९०

धायनः॥पुनर्महार्णवः॥ ॥अथातः पारायणविधिं व्याख्यास्यामः आसमाप्तेर्नाश्नीयात् यथाशक्तिं वा
पः पयः फलान्योदनं वा हविष्यमात्रमल्पं भुक्त्वा नदीशृणुमधीयीत प्रागाग्न्या व्यामुदीच्यां वा दिश्युपनिष्क्र
म्याग्निमुपसमाधाय परिस्तीर्य ध्रुवं प्रज्वाल्याज्येनैताभ्यो देवताभ्यो सामभ्यः जुहोत्यग्नये सोमायेन्द्राय प्र
जापतये बृहस्पतये विश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषिभ्यो ऋग्भ्यो यजुर्भ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै स
दसस्पतयेऽनुमतये श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डऋषये सोमाय काण्डऋषयेऽग्नये काण्डऋष
ये विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः सांहितीभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारु
णीभ्यो देवताभ्य उपनिषद्भ्यो हव्यवाहाय विश्वेभ्यो वरुणेभ्यो नमस्यै स्विष्टकृते च पृथक् स्वाहाकारेण हु
त्वा व्याहृतिभिश्च पुनः परिषिंचति समाप्ते चैवं यजुषान्तर्पयतीति॥ अन्ते एताग्निसोमाद्याः यजुषा पदेन सह
तर्पयेत्॥ यद्वा भूर्देवांस्तर्पयामीत्यादि यजुषा तर्पयित्वा ऽग्न्यादींस्तर्पयेदित्यर्थः॥ महार्णवः॥ एवं ऋग्वेदा
दिनां काण्डऋष्यादिवर्जमा स्विष्टकृत तेषां स्थाने शाखिभ्य इत्यादि महानाम्नीभ्य इत्यन्तं प्राग्वत्॥ ततो
वेदादिमारभ्य सन्ततमधीयीत नैनं स्यान्तरा न व्याधीनां स्यांतरा जननमरणे अशुचिः अशौचं नेत्यर्थः॥
नान्तरा व्याहरेन्न विरामेद्यावन्तमधीयीत॥ यावत्पर्यन्तं पठेत्तावत्पर्यन्तं न विरमेन्नान्यच्च वदेदित्यर्थः॥ य
द्यन्तरा विरमेत् त्रीन्प्राणानायम्य प्रणवं वा प्रविधाय यावत्कालमधीयीत सर्वे विशोनिशान्तरं संग्रामात्संग

स्यारण्यसलिलंलोप्यपरिदध्यात्॥ निशान्तरंसंध्या॥ निशादीनलोप्यविरम्यासमापयेदित्यर्थः॥ आदा
वन्तेचब्राह्मणभोजनंदक्षिणांचदद्यादितिमहार्णवोक्तम्॥ ॥अथकमलाकरः॥ यएतेनविधिनावेदमधी
यीतसततःपूतोवेदोभवतिमनःशुद्धिश्चभवति॥ वेदरूपोभवतीत्यर्थः॥ द्वाभ्यांपारायणाभ्यांऋग्भिश्चाऽभो
जनदुहाधीतेऽनृतेभ्यःप्रमुच्यतेत्रिभिर्बहुभ्यःपततीयपातकेभ्यःशूद्रायांरेतःसिक्त्वागंगाप्लुवन्निमज्य
श्चभवतिचतुर्भ्यःशूद्रान्नभोजनात्स्त्रीसेवनाच्च॥ पंचभिरयाज्ययाजनादग्राह्यग्रहणात् षड्भिर्ब्राह्मण
स्यलोहितकरणात्पशुहननात्कवर्णस्तेयात्स्वतितसंयोगाच्चसप्तभिःप्राजापत्यस्यहीनचरणाद्यज्ञोपव
स्यनाच्चाष्टभिश्चान्द्रायणगुरुतल्पगमनाद्रजस्वलागमनाच्च॥ नवभिःसुरापानात्॥ दशभिःपुनर्जन्मे
हजन्मकृतैःसर्वैःपापैःप्रमुच्यतेस्वर्गलोकंगच्छतीति॥ पितॄन्स्वर्गलोकंगमयति॥ अग्निष्टोमादिक्रतुभि
रिष्टंभवति॥ वेदाध्यायीसदेवस्यापाप्मासत्यवाक्शुचिः॥ यंयंकामयतेकामंतंतंवेदेनसाधयेत्॥ असा
ध्यंनास्तियत्किंचिद्ब्राह्मणोहिफलंमहत्॥ ऋग्विधाने॥ आदावेवतुसाविन्याकर्मकुर्वीतशान्तये॥ पुष्टये
पशुलाभायधनलाभायभूतये॥ एषाहिसंहितादेवेसर्वब्रह्ममयीनिचृत्॥ अग्रेणतपसादृष्टाविश्वामि
त्रेणधीमता॥ होमांश्चजपयज्ञांश्चनित्यंकुर्वीतवैनथा॥ सर्वकामप्रसिध्यर्थंपरंब्रह्मेदमुच्यते॥ एषावैप्र
तिलोमोक्तापक्षःशत्रुविनाशनी॥ अक्षरप्रतिलोमेयममभिचारेषुशस्यते॥ सर्वसंहितयाप्यन्यृचंहोमआज्ये

नतिलेनवा ॥ आज्यं द्रव्यमनादेशे जुहोतिषु विधीयत इति ब्राह्मोक्तेः ॥ सर्वपापहरो होमस्तिलैः सर्वत्र श
स्यत इति विष्णुधर्मोत्तरात् ॥ शातातपः ॥ कृच्छ्रादेरयुतं चैव वेदपारायणं तथा ॥ तिलहोमसहस्रं च सम
मेतच्चतुष्टयम् ॥ इदं केवलम् ॥ अन्ये चान्द्रमसम् ॥ इति कमलाकरभट्टकृतो वेदपारायणविधिः समा
प्तः ॥ इति चरणव्यूहे प्रथमखंडव्याख्या समाप्ता ॥ व्याख्या चरणव्यूहस्य आद्यखंडस्य तेन वै ॥ यथाम
तिविरचिता कृष्णदेवप्रसादतः १ यजुर्वेदस्य षडशीतिर्भेदा भवन्ति तत्र चरका नाम द्वादशभेदा भवंति चर
का आह्वरकाः कठाः प्राच्यकठाः कपिलकठा आरायणीया वारायणीया वार्तांतवेयाः श्वेताः श्वेततरा औप
मन्यवः पातांडिनीया मैत्रायणीयाश्चेति ॥ तत्र मैत्रायणीया नाम सप्तभेदा भवन्ति मानवा दुंदुभाश्चैकेया
वाराहा हारिद्रवेया श्यामाः श्यामायणीयाश्चेति तेषामध्ययनमष्टौ शतं यजुः सहस्राण्यधीत्य शाखापा
रो भवति तान्येव द्विगुणान्यधीत्य पदपारो भवति तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति षडंगान्यधी
त्य षडंगविद्भवति शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति अंगानि तत्र प्राच्यामुदीच्यां नैऋत्यां नै
ऋत्यां तत्र वाजसनेया नाम सप्तदश भेदा भवन्ति जाबाला बहुधेयाः काण्वा माध्यंदिनाः शापीयाः स्था
पायनीयाः कापालाः पौंड्रवत्साः आवटिकाः परमावटिकाः पाराशर्या वैधेया वैनेया औधेया गालवा
वैजवाः कात्यायनीयाश्चेति प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि भवन्त्यु

च. मू. यज्योतिषं सांगलक्षणं प्रतिज्ञानुवाकः परिसंख्या चरणव्यूहः श्राद्धकल्पः प्रवराध्याय उक्थशास्त्रं क्रतु
१२ संख्यानुक्रमयज्ञपार्श्वानि होत्रकं पसवोत्थानि कूर्मलक्षणमित्यष्टादश परिशिष्टानि भवन्ति इदं सहस्त्रेश
तेन्यूनेमन्त्रे वाजसनेयके॥ इत्युक्तं परिसंख्यानमेतत्सकलं समुच्चियम्॥ ग्रंथाश्च परिसंख्याता ब्राह्मणं
च चतुर्गुणम्॥ तत्र तैत्तिरीयकानामद्विभेदा भवंति औरव्या कांडिकेयाश्चेति तत्र कांडिकेयानामपंचभे
दा भवन्त्यापस्तंबी बौधायनी सत्याषाढी हिरण्यकेशी औधेयी चेति तत्र कठानानूपगायजुविशेषश्च
तुश्चत्वारिंशत्तुपग्रंथानि मंत्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते॥ यजुर्वेदस्तु विज्ञेयो ह्यन्ये शाखान्तरास्म
तास्तेषामध्ययनं प्रवचनीयाश्चेति॥ २ यजुर्वेदस्य षडशीतिभेदा भवंति॥ अत्र शाखाभेदो ग्राह्यः॥ षडश
शीतिर्भेदा इत्यर्थः॥ तत्र चरकानामद्वादशभेदा भवंति॥ इति स्पष्टार्थः॥ ते के भेदाः॥ चरकाः॥ आह्वरकाः
॥ कठाः॥ प्राच्यकठाः॥ कपिलकठाः॥ आरायणीयाः॥ वारायणीयाः॥ वार्त्तान्तवेयाः॥ श्वेताः॥ श्वेततराः
॥ औपमन्यवः॥ मैत्रायणीयाश्चेति॥ इति मैत्रायणीयशाखागणा इत्यर्थः॥ मैत्रायणीयस्तु वाजसनीयवे राम
दाध्यायी॥ मानवकर्मसूत्रम्॥ तेषामध्ययनमष्टोत्तरशतं यजुःसहस्राण्यधीत्य शाखापारो भवति॥ ते १२
षामध्ययनं द्विचत्वारिंशदध्यायाः॥ अष्टशताधिकसहस्रमंत्रा इत्यर्थः॥ तान्येव द्विगुणान्यध्य पदपारो
भवति॥ द्विवारपठनात्पदपारायणफलं भवतीत्यर्थः॥ तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति॥ त्रिवार

पठनात्क्रमपारायणफलं भवतीत्यर्थः॥ पदक्रमाध्ययनं भवतीत्यर्थः॥ तत्र प्राच्यां उदीच्यां नैरृत्यां
नैरृत्यास्तत्र वाजसनेयानां पञ्चदश भेदा भवन्ति॥ प्राच्योदीच्यनैरृत्यतिस्रादिशायां वाजसनीय
वेदोत्पत्तिः॥ अग्रे वक्ष्यामः॥ इतरदेशेषु वेदशाखयोर्विभाग उच्यते॥ तत्र महार्णवे॥ पृथिव्याम् ध्ये
रेखा च नर्मदा परिकीर्तिता॥ दक्षिणोत्तरयोर्भागे शाखाभेदाश्च उच्यते॥ नर्मदादक्षिणे भागे आपस्तंबा
श्वलायनी॥ राणायनी पिप्पला च यज्ञकन्याविभागिनः॥ माध्यंदिनी शांखायनी कौथुमी शौनकी तथा
॥ नर्मदोत्तरभागे च यज्ञकन्याविभागिनः॥ तुंगा कृष्णा तथा गोदा सह्याद्रिशिखरावधि॥ आआंध्रदेश
पर्यन्तं बह्वृचश्चाश्वलायनी॥ उत्तरे गुर्जरे देशे वेदो बह्वृच कीर्तितः॥ कौषीतकी ब्राह्मणं च शाखा शां
खायनी स्थिता॥ आन्ध्रादि दक्षिणाग्नेयी गोदासागर आवधि॥ यजुर्वेदस्तु तैत्तिर्यो आपस्तम्बी प्रतिष्ठि
ता॥ सह्याद्रिपर्वतारंभादिशा नैरृत्यसागरान्त॥ हिरण्यकेशी शाखा च परशुरामस्य संनिधौ॥ मयूरप
र्वताश्चैव यावद्गुर्जरदेशतः॥ व्याप्ता वायव्यदेशात्तु मैत्रायणी प्रतिष्ठिता॥ अंगवंगकलिंगश्च कानीनो गु
र्जरस्तथा॥ वाजसनीयशाखा च माध्यंदिनी प्रतिष्ठिता॥ ऋषिणा याज्ञवल्क्येन सर्वदेशेषु विस्तृता॥ वाज
सनीयवेदस्य प्रथमा काण्वसंज्ञकेति॥ व्यासशिष्यो वैशंपायननिरहाख्यो यजुर्वेदं पठित्वा शिष्यान् च
कार॥ तत्र भागवते॥ वैशंपायनशिष्या वै चरकाध्वर्यवोभवन्॥ यैश्चरुर्ब्रह्महत्याया क्षपणं स्वगुरोर्व्रतम्॥

च॰भू॰ याज्ञवल्क्यस्ततश्शिष्यो अहाहो भगवान्कियत्॥ चरितेनाल्पसारेण चरिष्येहं सुदुस्तरम्॥ इत्युक्तो
१३ गुरुरप्याह कुपितो मिह्यतां त्वया॥ विप्रावमंत्राशिष्येण अधीतं त्यजन्विति॥ देवरातसुतः सोपि विदि
त्वा यजुषां गणम्॥ ततो गतोथ मुनयो ददृशुस्तान्यजुर्गणान्॥ यजूंषि तित्तिरी भूत्वा तं लोलुपतया ददुः॥ तै
त्तिरीया इति यजुःशाखाभ्यासंस्तु पेशलाः॥ याज्ञवल्क्यस्ततो ब्रह्मन्छन्दांस्यधिगवेषयन्॥ गुरोरविद्य
मानानि तत्पस्ते पर्कमीश्वरम्॥ याज्ञवल्क्य उवाच॥ ॐ नमो भगवते इत्यादि॥ जीर्णमुर्के उच्छिष्टवान्ते यातं
याम शब्द इति निघंटुः॥ एवमेवार्थः यातयामयजुः॥ कास्डपसरश्मिस्मं ततुष्टाव॥ एवंस्तुतः स भगवा
न्वाजीरूपधरो हरिः॥ यजूंष्ययातयामानि मुनयेदात्प्रसादितः॥ यजुर्भिरकरोच्छाखा दश पंच तथा वि
भुः॥ जगृहुर्वाजसन्यस्ताः काण्वमाध्यंदिनादयः॥ इत्यादि पर्यालोचनया यजुर्वेदस्यागानन्तरं देवरा
तसुतेन अब्राह्मणत्वभियास्वविनासूर्यो वाजीरूपेण वाजभ्यः केसरेभ्यः वाजेन वेगेन वा सन्यस्तास्त्य
क्ताः॥ शाखा वाजसनेयी संज्ञा शाखा रण्डत्वपरिहारार्थं चातुर्वेद्यत्वसंख्यासंरक्षणार्थं च वाजीरूपेण सू
र्येणायातयामानि यजूंषि मुनये दत्तानि तैर्यजुर्भिरुपरितैः समुनिस्ता वाजसन्यः पंचदशशाखा अकरो
त्॥ तस्माच्च मुनेः काण्वमाध्यंदिनादयः अध्ययनं चक्रुः॥ ते पंचदश भवंति॥ अथ प्रसंगात यजुर्वेदस्य शा राम
खाप्रणयनविचारः किंचिदुच्यते॥ तत्र यजुर्वेद एव प्रथमः॥ तथा च विष्णुपुराणे॥ एक एव यजुर्वेदस्तं चतु १३

र्द्धोव्यवकल्पयदिति ॥ यजुर्वेदः यज्ञोपयोगित्वरूपयोगात् सर्वोपिवेदो यजुर्वेद इत्युच्यते ॥ यजुर्वेदस्य शा
खाभेदं सविस्तरमाह ॥ यजुर्वेदतरोः शाखाः सप्तविंशन्महामतिः ॥ वैशंपायननामासौ व्यासशिष्यश्चका
र वै ॥ शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेप्यनुक्रमात् ॥ याज्ञवल्क्यस्य तस्याभूद्ब्रह्मराजः सुतो द्विजः ॥ शिष्यः
परमधर्मज्ञो गुरुवृत्तिरतः सदा ॥ ऋषियोंश्च महामेरौ समाजे नागमिष्यति ॥ तस्य वै सप्तरात्रात्तु ब्रह्महत्या
भविष्यति ॥ पूर्वमेवं मुनिगणैः समयो यः कृतो द्विज ॥ वैशंपायन एकस्तु तं व्यतिक्रान्तवांस्तथा ॥ स्वस्त्रीयं
बालकं सोथ पदा घृष्टमघातयत् ॥ शिष्यानाह च भोः शिष्या ब्रह्महत्यापरा व्रतं ॥ चरध्वं मत्कृते सर्वे न वि
चार्यमिदं तथा ॥ अथाह याज्ञवल्क्यस्तं किमेतैर्बहुभिर्द्विजैः ॥ क्लेशितैरल्पतेजोभिश्चरिष्येहमिदं व्रतम्
॥ ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामुनिम् ॥ मुच्यतां यत्त्वयाधीतं मत्तो विप्रावमानक ॥ निस्तेजसो
वदस्येतान् यस्त्वं ब्राह्मणपुंगवान् ॥ तेन शिष्येण नार्थोस्ति ममाज्ञाभंगकारिणा ॥ याज्ञवल्क्यस्ततः प्रा
ह भक्त्यैतत्ते मयोदितम् ॥ ममाप्यलं त्वयाधीतं यन्मयागदितं द्विज ॥ श्रीपराशर उवाच ॥ ॥ इत्युक्त्वा रुधि
राक्तानि सरूपाणि च यजूंष्यथ ॥ छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः ॥ यजूंष्यथ विसृष्टानि याज्ञवल
क्येन वै द्विजाः ॥ जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ततः स्मृताः ॥ ब्रह्महत्याव्रतं चीर्णं गुरुणा नोदितं तु यैः ॥ चर
काध्वर्यवस्ते तु चरणान्मुनिसत्तम ॥ याज्ञवल्क्योपि मैत्रेय प्राणायामपरायणः ॥ तुष्टाव प्रणतः सूर्यं यजूंष्य

च.व्यू. मिलिषत्तमः॥अस्यार्थः॥यजुर्वेदोत्तरेत्यादिना सप्तविंशतिः॥इयं च प्रधानशाखानां संख्या॥ब्रह्मा
१४ एडपुराणोक्तषडशीतिशाखाभेदस्तु प्रतिशाखाविवक्षया ताश्चमुक्ता यजुः पंचदशकं सहस्त्येकशाखा
आपस्तंबोक्ता इति द्रष्टव्यम्॥याज्ञवल्क्येन छर्दिते यजुर्भिस्तैत्तिरीयशाखा बभूव॥ते याज्ञवल्क्यव्यति
रिक्ता वैशंपायनस्य शिष्याः याज्ञवल्क्येन छर्दितं विप्ररूपेण गृहीतुमनुचितमिति तित्तिरपक्षिणो भूत्वाया
ज्ञवल्क्यविसृष्टानि यजूंषि जगृहुः॥ततस्ताः शाखास्तैत्तिरीया बभूवुरित्यर्थः॥याज्ञवल्क्यव्यतिरिक्तानां
चरकाध्वर्युसंज्ञां निर्वक्ति॥चकाराध्वर्यवस्ते वै चरणान्मुनिसत्तमेति॥चराध्वर्यवमिति पाठे चरणाद्यजुषा
ग्रहणात्॥आध्वर्यवं चक्रुरित्यर्थः॥यजूंषि वैशंपायनेनाधीतानि॥याज्ञवल्क्यस्ततो ब्रह्मन्छन्दांस्यधि
गवेषयन्॥गुरोरविद्यमानानि सूपतस्थेर्कमीश्वरमिति भागवतोक्तेः॥याज्ञवल्क्य उवाच॥नमः सवित्रे
द्वाराय मुक्तेरमिततेजसे॥ऋग्यजुःसामरूपाय त्रयीधाम्नात्मने नमः॥इत्येवमादिभिस्तेन स्तूयमानः स
वै रविः॥वाजीरूपधरः प्राह व्रजनामभिवांछितम्॥याज्ञवल्क्यस्तथा प्राह प्रणिपत्य दिवाकरम्॥यजूंषि
तानि मे देहि यानि संति न मे गुरुः॥पाराशर उवाच॥एवमुक्तो ददौ तस्मै यजूंषि भगवान्रविः॥अयातयाम
मसंज्ञानि यानि न वेत्ति तद्गुरुः॥यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम॥वाजिनस्ते समाख्याताः सूर्योऽश्वः राम
सोऽभवद्यतः॥शाखाभेदस्तु तेषां वै दश पंच च वाजिनाम्॥काण्वाद्यास्तु महाभाग याज्ञवल्क्यप्रकीर्तिताः १४

इति॥तदुक्तः वैशंपायनो याज्ञिनवेत्तिते वा व्यासेनात्र परिष्ठत्वादिति भावः॥ वाजिनः समाख्याताः वाजि
रूपसूर्यप्रोक्तसंहिताध्यायित्वात्॥अग्निपुराणेपि॥काण्वामाध्यंदिनीसंज्ञाकठीमाध्यकठीतथा॥मैत्राय
णीयसंज्ञाचतैत्तिरीयाभिधानका॥वैशंपायनिकेत्याद्याः शाखायाजुषसंज्ञिताइति॥आदिशब्देनएतद
न्यशाखाग्रहणम्॥तदुक्तंनृसिंहपराशरे॥ ॥प्रथमोयाज्ञवल्क्यश्च आपस्तंबोद्वितीयकः॥तृतीयोमूल
घटकश्चतुर्थीवाणसः स्मृतः॥पंचमः सहवासश्च षष्ठः स्याद्गोत्रपंडितः॥रामानुजः सप्तमोक्तअष्टमश्चागया
वलः॥त्रिदंडोनवमः प्रोक्तानवशाखाः प्रकीर्तिताः॥तन्मध्येसहवासस्तुकर्मनिष्ठोद्विजाग्रणी॥एवंशाखा
देशभेदात्बहवस्तुद्विजातयः॥तत्रापिकर्मनिष्ठाश्चग्राह्यायज्ञादिकर्मसु॥हीनाद्विजातयः सर्वेत्याज्याः
सर्वत्रकर्मसु॥हीनाद्विजातयः॥अभीरादयः॥परदेशेत्रिदंडिनोवेषधारिणः॥सन्यासिनः स्वयमेप
रिग्रहयुक्तास्तेत्रिदंडिनः॥गोत्रपंडितः वैश्ययाजकः॥मूलघटकः नागवल्लीरोपकः निर्मूलाइतिप्रसि
द्धाः॥अन्येवाणसादिप्रसिद्धाः॥केचिद्धर्मशास्त्रानभिज्ञाः वानप्रस्थाज्जातावाणसाइतिवदंतितद्वाक्यं
आरूढपतितपरम्॥तदुक्तंकौर्मेवानप्रस्थाश्रमधर्मे॥यस्तुपत्न्यावनंगत्वामैथुनंकामतश्चरेत्॥तद्व
तंतस्यलुप्येतप्रायश्चित्तीयतेद्विजः॥तत्रयोजायतेगर्भोनसंस्पृश्योद्विजातिभिः॥नहिवेदेऽधिकारोस्य
तद्वंशेप्यवमेवहि॥आरूढपतितः प्रोक्तोमुनिभिस्तत्त्वदर्शिभिरिति॥वाजसनीयवेदोत्पत्तिरित्यर्थः॥

च.व्यू. १५ काण्वाः माध्यंदिनाः शापीयाः स्थापायनीयाः कापालाः पौंड्रवत्साः आवटिकाः परमावटिकाः पाराशर्या वै
धेया वैनेयाः औधेयाः गालवा वैजवाः कात्यायनीयाश्चेति ॥ पंचदश शाखा इत्यर्थः ॥ प्रतिपदमनुपदम
॥ अतिपदमत्र पदमन्यपदं कर्त्तव्यमित्यर्थः ॥ छन्दः छंदोरत्नाकरादि ॥ भाषाशब्दपरिभाषा ॥ धर्मशास्त्रं
मिताक्षरादि ॥ मीमांसा प्रसिद्धा ॥ न्यायस्तर्कः ॥ इति षडंगानि ॥ उपज्योतिषं ज्योतिःशास्त्रम् ॥ साङ्ख्यं लक्ष
णं सामुद्रिकादि ॥ प्रतिहात्रवाक्यः अनेन वाक्येन अयं सिद्धांतः ॥ परिसंख्या भूगोलादि ॥ अनुस्मरण
व्यूहः ॥ श्राद्धकल्पः ॥ प्रवराध्यायश्च ॥ शास्त्रक्रतुसंख्या कल्पादिषु ज्ञातव्या ॥ अनुगमयज्ञक्रियाः पा
ष्टानिहोत्रकम् ॥ यज्ञक्रिया होत्रम् ॥ पशवो वस्यानि पशुयज्ञः ॥ कूर्मलक्षणं यज्ञे प्रसिद्धम् ॥ इति अष्टा
दश परिशिष्टानि भवंति ॥ द्वे सहस्रे शते न्यूने मंत्रे वाजसनेयके ॥ इत्युक्तपरिसंख्यातमेतत्सकलं सशु
क्रियम् ॥ वाजसनेयके वेदे नवशताधिकसहस्रमंत्रा इत्यर्थः ॥ एतत्सकलं सशुक्रियं मध्यान्हेसूक्तान
णीनसूर्येण दत्तः सशुक्रयज्ञः ॥ परिसंख्यातमित्यर्थः ॥ वेदोपक्रमणे चतुर्दशी पौर्णिमाग्रहणात् शु
क्लयजुः ॥ प्रतिपदास्तु कृष्णपौर्णिमाग्रहणात् कृष्णयजुरितिवा ॥ ब्राह्मणं च चतुर्गुणम् ॥ वेदचतुर्गुणं ब्राह्मण राम
मित्यर्थः ॥ यजुर्वेदतरोरासन् शाखा एकोत्तरं शतम् ॥ तत्रापि शिवचाशाखा द्वादश पंच च वाजिनाम् ॥ तत्रा १५
पि संख्या विज्ञेया शाखा या काण्वसंज्ञिकाः ॥ ग्रन्थांतरे ॥ तैत्तिरीयकानां द्विभेदा भवंति ॥ औख्या कांडिकेया

श्चेति॥तेषामध्ययनपरिमाणम॥कांडास्तुसप्तविज्ञेयाः प्रश्नाश्चाधिकवैचतुः॥चत्वारिंशत्तुविज्ञेयाअ
नुवाकाः शतानिषट्॥एकपंचाशदधिकसंख्यापन्नाशिउच्यते॥द्विसहस्रंचैकशतमष्टानवतिचाधिका॥
लक्षैकंतुद्विनवतिसहस्राणिप्रकीर्तिता॥पदानिनवतिश्चैवतथाअक्षरउच्यते॥लक्षद्वयंत्रिपंचाशत्सह
स्राणिशताष्टकम्॥अष्टषष्ट्यधिकंचैवयजुर्वेदप्रमाणकः॥कांडानि ७ प्रश्नाः ४४ अनुवाकाः ६५१ पन्नाशी
२१९८ पदानि १९२९० अक्षराणि २५३८६८ शाखावाक्यान्ययुतानिसहस्राणिनवानिच॥चतुःशतान्यशी
तिश्चअष्टौवाक्यानिगण्यते॥इतिब्राह्मणअष्टौवाक्यसंख्या १९४८० इतितैत्तिरीयनिगदवेदाख्यसंख्याउ
क्तइत्यर्थः॥तत्रकठानान्तूपगायजुचतुश्चत्वारिंशदुपग्रंथाः॥मंत्रब्राह्मणयोर्वेदस्त्रिगुणयत्रपठ्यते
॥यजुर्वेदःसविज्ञेयअन्येशाखांतराःस्मृताः॥चतुश्चत्वारिंशदुपग्रन्थाः॥अध्यायाःसमीपउक्ताः चतुश्च
त्वारिंशत॥मंत्रश्चब्राह्मणंचमंत्रब्राह्मणेतयोःमंत्रब्राह्मणयोःवेदइतिसंज्ञा॥तदुक्तम॥मंत्रब्राह्मण
योर्वेदइतिनामधेयमित्युक्तशाखीयमानि शाखीयभाष्यकारेणआपस्तंबसामान्यसूत्रभाष्यकारेणक
पर्दिनाधूर्तस्वामिनाचमंत्रोनामसंहितामंत्रस्तादृक्मंत्ररूपसंहितायाः तन्मध्येएवतदग्रेब्राह्मणत्वेन
पठनमित्युभयथापिसंहितात्वेनपदत्वेनक्रमत्वेनचपठनंत्रिगुणंपठनमितिसमंत्रब्राह्मणयोर्वेदस्त्रि
गुणंयत्रपठ्यतइत्यस्यार्थः॥एतादृशपठनंशाखायाअध्ययनंसयजुर्वेदस्तच्चतैत्तिरीयशाखायामेवास्ति॥त

थाहिसंपश्यामि प्रजा अहमिड प्रजसोमानवीरिति संहितामन्त्रः॥ एतस्यै ब्राह्मणं संहितायामेवतद्ग्र एवसंपश्यामि प्रजा अहमित्याह यावन्त एवेति ब्राह्मणमित्युभयोरपि संहितात्वेन पदत्वेन क्रमत्वेन पठनं त्रिगुणितपठनं भवति॥ एतादृशमुदाहरणांतरमाह॥ इमामगृभ्णान्रशनामृतस्य पूर्व आयुषि विदथेषिति संहितामन्त्रः॥ एतस्यैव ब्राह्मणं संहितायामेवतद्ग्रे एवसंहितारूपेण वर्तते॥ तत्कथमित्यपेक्षायामाह॥ इमामगृभ्णान्रशनामृतस्येत्यश्वाभिधानीमादत्त इति ब्राह्मणम्॥ अनयोरपि त्रिगुणत्वेन पठनम्॥ उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रय इति त्रिगुणेन पठनं भवति॥ एते त्रिगुणाः कस्या अपि शाखायां न भवंति॥ किन्तु गाथाग्रन्थत्वात्॥ एवमन्यानि बहून्यपि वाक्यानि सन्ति तानि विस्तरभयान्नोक्तानि॥ अतः कारणात्॥ अन्ये शाखान्तरास्मृताः॥ तेषामध्ययनं प्रवचनीयाश्चेति॥ एतेषां शाखानां अध्ययनं प्रवचनीयाः प्रतिवचनीयत्वेन समाप्तमित्यर्थः २॥ इतिचरणव्यूहे द्वितीयखंडव्याख्या समाप्ता॥ सामवेदस्य किल सहस्रभेदा आसीरन् अनध्यायेष्वधीयानास्ते वज्रेण शक्रेणाभिहताः प्रनष्टाः शेषान्प्रवक्ष्यामि आसुरायणीया वासुरायणीयाः प्राञ्जलकृद्वैनैभिधाः प्राचीनयोग्यानयोग्याश्चेति नवराणायनीयानामनवभेदा भवन्ति राणायनीयाः शाट्यायनीयाः सात्यमुग्रलाः खल्वला महाखल्वला लांगलायौशुभागौतमा जैमिनीयाश्चेति तेषामध्ययनमष्टादशानि दशातिरश्चमप्रसुवालखिल्याः सुपर्णः प्रैस्यए

तत्सामगणं स्मृतम् ३ आसां षोडश शाखानां मध्ये तिस्रः शाखा विद्यन्ते। तासु गुर्जरदेशे कौथुमी प्र-
सिद्धा। कर्नाटके जैमिनी प्रसिद्धा। महाराष्ट्रदेशे राणायनीया चेति। एषामध्ययनम्। अष्टौ साम सह-
स्राणि छन्दोगार्चिकसंहिता। गानानि तस्य वक्ष्यामि सहस्राणि चतुर्दश। अष्टौ शतानि ज्ञेयानि दशो-
त्तराणि तथैव च। ब्राह्मणं चोपनिषदं सहस्रत्रितयं तथा ३ अथर्ववेदस्य नव भेदा भवन्ति पैप्पलादास्ताः
मदाता स्तौ ता औता ब्रह्मदा पला शौनकी वेददर्शी चरणव्यूहं विद्याश्चेति तेषामध्ययनं पंच सामवेद
इति किलेति प्रसिद्धो सहस्रभेदा आसीत्। सहस्रभेदमध्ये प्राक्के णवज्रेणाभिहता अनष्टाः अनध्याये-
ष्वधीयानाः प्रोयन्ते विद्युता खलु इति। शेषान् अहतान् शाखापाठकान्। व्याख्यास्यामः। आसुराय-
णीया वासुरायणीया वार्तान्तरेया प्राञ्जलऋग्वैनविधाः। प्राचीनयोग्या। राणायनीयाश्चेति। राणाय-
नीयानां नव भेदा भवन्ति। राणायनीयाः शाट्यायनीयाः सत्यसमुद्गतः खल्वला महाखल्वला लाङ्ग-
लाः कौथुमी गौतमी जैमिनीयाश्चेति। तेषामध्ययनं अष्टौ सामसहस्राणि सामानि च चतुर्दशान्यष्टौ
शतानि दशभिर्दश सप्तसु वालखिल्यः सुपर्णः मत्स्यमेतत्सामगणस्मृतम्। अथ प्रकारान्तरेणाह। तत्र
राणायनीयानां सप्त भेदा भवन्ति। राणायनीयाः। सात्यमुग्राः। कालेया महाकालेया लांगलायनाः शार्दू-
लाः। कौथुमाश्चेति। तत्र कौथुमानां षट् भेदा भवन्ति। कौथुमाः १ आसुरायणाः २ वातायनाः ३ प्राञ्जलि

लिट्टेनभृतः ४ प्राचीनयोग्याः ५ नैगमीयाः ६ इतितेषांकौथुमारीनाम ध्ययनम्॥अशीतिशतमाग्नेयंपा
वमानंचतुःशतम्॥ऐंद्रंतुषड्विंशतियानि गायंतिसामगास्तानिसूक्तानिअधीमेचंडाउत्कृष्टाःतेचइन
राः अत्युत्कृष्टाभवंतिशिष्टानि व्यतिरिक्तानिअधीत्यपठित्वाशिष्टाविंशतिकोभवेतिशिष्टान् प्रामाणि
कान् आविंशतिशिष्टेष्ववाशिष्टभागाः सर्वेशयोग्याः शिष्टाअष्टाविंशतिगणानांपूरकाः सर्वेश्रेष्ठो
भवतीत्यर्थः।तत्रसूक्तेषुकेचिन्मंत्रतंत्राइतिमंत्राश्चतुर्धाविधीयंते।आचार्यःतदाहः श्रुततंत्रम् १ सा
मतंत्रम् २ संज्ञालक्षणम् ३ धातु लक्षणमिति ४ इदानींसामसंख्यामाह ॥ अष्टौसामसहस्राणिसामा
निचचतुर्दश।अष्टौशतानिनवतिर्विंशतिर्वालखिल्यकम्॥सरहस्यंससुपर्णंप्रेक्ष्यतत्सामइर्येणम्॥
सारण्यकानिसौपर्णानिएतत्सामगणंस्मृतम्॥अशीतिशतमाग्नेयम् १८० पावमानम् १०४ ऐंद्रंतु २६
शिष्टा २८ गणानांपूरकाः अष्टौसामसहस्राणिसामानिचचतुर्दशअष्टौशतानिनवतिर्विंशतिर्वालखि
ल्यकम्॥अस्यार्थः ८८१४ अंकतोज्ञातव्यः॥अन्यशाखासंख्यामाह नवतीतिसुपर्णप्रेक्षःकश्चिच्छाखा
भेदः तत्सहवर्तमानःससुपर्णप्रेक्षः सुपर्णप्रेक्षेणसहितोवालखिल्यःशाखाभेदोनवतिःनवतिसंख्या
काः दशादशतयोयस्मिन्सनवतिदशतिः।दशतिरितिदशसंख्यासंज्ञादशगणानवतिरित्यर्थः॥अं
कतोपि ९० सारण्यकानिआरण्यकानिआरण्यकेतोपनिषद्भागेनसहवर्तमानानिसौपर्णानिसूर्यदैवता

निसूक्तानि॥ तत्रवालखिल्यशाखायामेव॥ आरण्यकंसूर्यसूक्तंसुवर्णमेषवालखिल्यानिमिलित्वानव
शतानीत्यर्थः निगमयंति एवंदिति एततत्पूर्वोक्तसामसमूहःस्मृतंकथितम्॥ गणशब्दस्यबलीयस्त्वंद्योत
सौ॥ राणायनीसात्यमुग्रीडुवींसा। अथभागुरीगौरुंडी। गौर्गुजवीभगवानोपमन्यवः १ दारालोगार्ग्यसाव
र्णीवर्षगण्यश्चेतेदश॥ कुथुमिशालिहोत्रश्चजैमिनिश्चत्रयोदशाइत्येतेसामगाचार्याःस्वस्तिंकुर्वंतुतर्पिता
इति २ इतिचरणव्यूहभाष्येतृतीयःखंडः॥ अथर्ववेदस्यनवभेदाभवन्ति पैप्पलादास्तौदायनास्तौभौता
ब्रह्मदायशशौनकीवेददर्शीचरणविद्याश्चेति तेषामध्ययनंपंचकल्पानिभवंति। कल्पापंचशतेरपिनक्षत्र
कल्पोविधानकल्पोविधिविधानकल्पोसंहिताकल्पःशांतिकल्पश्चेति। सर्वेषामेववेदानामुपवेदाभव
न्ति ऋग्वेदस्यायुर्वेदउपवेदो। यजुर्वेदस्यधनुर्वेदउपवेदो। सामवेदस्यगान्धर्ववेदउपवेदो। थर्ववेदस्यशस्त्र
शास्त्राणिभवंति। ऋग्वेदस्यात्रिगोत्रंब्रह्मदेवत्यंगायत्रंछंदो। यजुर्वेदस्यभारद्वाजगोत्रंविष्णुदेवत्यंत्रैष्टुभं
छंदः। सामवेदस्यकाश्यपगोत्रंरुद्रदेवत्यंजागतंछंदो ऽथर्ववेदस्यवैतानगोत्रमिन्द्रदेवत्यमानुष्टुभंछंदः
ऋग्वेदोरूपवर्णः पद्मपत्रायताक्षः सुविभक्तग्रीवः कुंचितकेशः श्मश्रुपिंगाक्षप्रमाणेनतुद्विरत्निमात्रोयजु
र्वेदः। दीर्घकपोलस्ताम्रवर्णःकांचननयनआदित्यवर्णेनपंचारत्निमात्रः। सामवेदोनित्यस्रग्वीशुचिःवा
सशामीदान्तोशमीदंडीकांचननयनश्वेतवर्णेनषडरत्निमात्रोऽथर्ववेदस्तीक्ष्णश्चंडःकामःकामरूपीक्षुद्रक

च.व्यू. मोक्षेनसाध्यवशीघ्रसजलमूर्द्धनिगालवःस्वराज्नुवःपारस्क्रियान्यपश्येतियदृष्टंदैवतुरूपंगोत्रप्रमाणंछंदो
९७ वर्णाञ्चपश्यंति।जन्मजन्मनिवेदपारोभवंतिजन्मजन्मनिवेदपारोभवंतिअप्रहितःप्रहितोभवतिअव्रतोव्रती
भवत्यब्रह्मचारीब्रह्मचारीभवतिज्ञातिस्मरोजायतेनमःशौनकायनमःशौनकायनमः—— परमऋषिभ्यो
नमःपरमऋषिभ्यः॥यइदंचरणव्यूहंपर्वसुश्रावयेद्द्विजः।शौचपापात्प्रमुच्यतेविर्विप्रोब्रह्मभूयायकल्पते १ यइ
दंचरणव्यूहंश्राद्धकालेसदापठेत्।अक्षय्यंतद्भवेच्छ्राद्धंपितृंश्चैवोपतिष्ठति २ यइदंचरणव्यूहंगुर्विण्यःशृ
णुतेस्त्रियःपु—मांसंजनयेत्पुत्रंसर्ववेदंवेदपारगम् ३ योधीतेचरणव्यूहंसविप्रःपंक्तिपावनः।तारयत्यखि
लान्पूर्वान्पुरुषान्सप्तसप्तच ४ योनामानिपुरावेदसोअमृतत्वंचगच्छति॥लोकातीतंमहाशान्तममृतत्वं
चगच्छतिलोकातीतंमहाशान्तममृतत्वंचगच्छत्योंनमःइत्याहभगवान्व्यासःपाराशर्यःनमःपरमऋषि
भ्योनमःपरमऋषिभ्यः॥तंवेदशास्त्रपरिनिष्ठितशुद्धबुद्धिंचर्मांबरंसुरमुनींद्रनुतंकवीन्द्रम्॥कृष्णद्विजंक
नकपिंगजटाकलापंव्यासंनमामिशिरसातिलकंमुनीनाम् ५ इतिचरणव्यूहेचतुर्थःखण्डः॥अथप्रकान्त
रमाह।अथर्ववेदस्यनवभेदाभवंतिपिप्पला।शौनका।दामोदा।तोतायना।जाबाला।ब्रह्मपलाशाकुनखी। राम
देवदर्शी।चारणविद्याश्चेतितेषामध्ययनंद्वादशोवसहस्राणिपंचकल्पानिभवंति।कल्पेकल्पेपञ्चशतानि १८
भवंति।नक्षत्रकल्पोविधानकल्पःसंहिताविधिरभिचारकल्पःशान्तिकल्पश्चेति।तत्रवेदानामुपवेदाभवंति

ऋग्वेदस्यायुर्वेद उपवेदो यजुर्वेदस्य धनुर्वेद उपवेदः सामवेदस्यार्थशास्त्रं चेत्याह भगवान्व्यासः स्कंदो वा य इमे वेदाश्चत्वार
स्तेषामेकैकस्य कीदृशं रूपं वर्णं विधीयते। ऋग्वेदः पद्मपत्राक्षः सुविभक्तग्रीवः कुंचितकेशश्मश्रुः श्वेतवर्णो वर्णेनत्रुकीर्तितं
प्रमाणं तावति ष्ठन्वितस्तीः पंच। यजुर्वेदः पिंगाक्षः कृशमध्यस्थूलगलकपोलस्ताम्रवर्णः कृष्णवर्णो वा प्रादेशमात्रं षडुदीर्घत्वेन सा
मवेदो नित्यं स्रग्वी सुयतः शुचिर्वासाः शमी दान्तो बृहच्छरीरः शमी दंडी कानरनयन आदित्यवर्णो वर्णेन नवारत्निमात्रोऽथर्ववेद
स्तीक्ष्णः प्रचंडः कामरूपी श्वालाविस्वाकर्ता क्षुद्रकर्ता स्वशाखाध्यायी प्राज्ञश्च महानीलोत्पलवर्णो वर्णेन दशारत्निमात्रं ऋग्वेदस्या
त्रेयसगोत्रं सोमदैवत्यं गायत्रं छन्दो यजुर्वेदस्य काश्यपसगोत्रमिंद्रदैवत्यं त्रि ष्टुप्छन्दः सामवेदस्य भारद्वाजसगोत्रं रुद्रदैवत्यं ज
गतीछन्दोऽथर्ववेदस्य वैतानसगोत्रं ब्रह्मदैवत्यमनुष्टुप्छन्दः। य इमे वेदानां नानानामरूपगोत्रप्रमाणं छन्दोदैवतं वर्णं वर्णयति। अवि
द्यो लभते विद्यां जातिस्मरोऽथ जायते। जन्मजन्म वेदपारगो भवत्यव्रतो व्रती भवत्यब्रह्मचारी ब्रह्मचारी भवति। नमः शौनकाय नमः शौ
नकाय ५ य इदं चरणव्यूहं गर्भिणीं श्रावयेत्स्त्रियम्। पुमांसं जनयेत्सत्र महर्षिर्वेदपारगः। य इदं चरणव्यूहं श्राद्धकाले पठेद्द्विजः। अक्ष
य्यं तद्भवेच्छ्राद्धं पितॄंश्चैवोपतिष्ठति। य इदं चरणव्यूहं पठेत्स पंक्तिपावनः। तारयेत्पुत्रप्रभृतीन्सुत्रास्तुरुषैः सप्तसप्ततिः। य इदं चरण
व्यूहं पठेन्नित्यं पर्वसु विधूतपाप्मा स स्वर्गं ब्रह्मभूयाय गच्छति ब्रह्मभूयाय गच्छति॥ राणायनीसात्यमुग्रिदुर्वासाऽथ भागुरी। गौरुंडी
गौल्गुलवी भगवानौपमन्यवः। दाराला गार्ग्यसावर्णी वार्षगण्यश्च ते दश। कुथुमिश्च शालिहोत्रश्च जैमिनिश्च त्रयोदश इत्येते सामगा
चार्याः स्वस्ति कुर्वन्तु तर्पिताः अथर्ववेद इति॥ अथर्ववेदस्य नव भेदा भवंति। न व शाखा भवंतीत्यर्थः। तानाह। पैपलादा। स्तौदा मौदा
ब्रह्मदायशशौनकी वेददर्शी॥ चरणविद्याश्चेति तेषामध्ययनं द्वादशैव सहस्राणि अत्र बहुवचनं ते बहवः यत्र एकवचनं स एक एकने

णामध्ययनेसरवायोऽस्मिनेद्वादशसहस्राणिमंत्राणाम्॥कीदृशानि पंचकल्पानिभवंतिएकस्मिन्कल्पेकल्पेपंचशतानिमं
त्राणाम्।कल्पानाह॥नक्षत्रकल्पः१विधानकल्पः२संहिताविधिकल्पः३अभिचारकल्पः४शांतिकल्पः५इतिपंचकल्पाः।तत्रवे
दानांचत्वारउपवेदाभवंति।यजुर्वेदस्यधनुरायुर्वेदःचिकित्साशास्त्रम्।ऋग्वेदस्योपवेदः१धनुर्वेदोयुद्धशास्त्रंयजुर्वेदस्योपवेदः
गांधर्ववेदःसंगीतशास्त्रंसामवेदस्योपवेदः३सामवेदस्यगांधर्ववेदउपवेदःऋग्वेदस्यायु र्वेदउपवेदःअथर्ववेदस्यशास्त्रंचेत्या
हअर्थशास्त्रं।नीतिशास्त्रंशास्त्रंविश्वकर्मादिशिल्पिशास्त्रं।अथर्ववेदस्योपवेदः४भगवान्व्यासःस्कंदकुमारोवाइति।यद्दमेचत्वा
रोवेदाउक्तास्तेषांमध्येएकैकस्यकीदृशंरूपंआकारः।ननद्वयोसिदाक्षिनादिवर्णःविधकः।प्रकारश्चोच्यते।ऋग्वेदस्वरूपमाह॥ऋ
ऋग्वेदःपद्मपत्रायताक्षः॥पद्मपत्रंकमलदलंतद्वद्दक्षिणीनेत्रेयस्यसः।सुविभक्तग्रीवःसुविभक्तारेखात्रयांकितायस्यसः।किं
चित्केशश्मश्रुःकुंचिताःवलीमंतःकेशाःशिरसिजाःश्मश्रूणिमुखरोमाणियस्यसः।श्वेतवर्णोवर्णेनतुकर्कुवर्णोनश्वेतवर्णःश्वेतोवर्णो
यस्यसः।कीर्तितंप्रमाणंतावत्रिष्टुंवितस्तीःपंचतावत्साकल्येनपंचवितस्तीनभवंतिनिहृतत्प्रमाणंऋग्वेदस्यकीर्तितं।उक्तम्।वितस्ति
शब्दोवितस्तिद्वादशांगुलःसार्द्धहस्तद्वयप्रमाणमित्यर्थः।यजुर्वेदस्वरूपमाह।यजुर्वेदःपिंगोपीतेअक्षिणीयस्यसः।कृशांमध्यकृशं
मध्येकटिप्रदेशोयस्यसः।स्थूलगलकपोलः।स्थूलौगलकपोलौयस्यसः।ताम्रपीतवर्णः।ताम्रपीतत्वाम्रवदाचरितोरक्तोवर्णोयस्य
सः।षड्ढाङ्गुलवर्णः।कुशवर्णोयस्यसः।प्रादेशमात्रेषड्दीर्घत्वेनदीर्घत्वेनोच्चत्वेनषट्प्रादेशमात्रः।षट्प्रादेशप्रमाणयस्यसः।प्रमाण
मात्रस्येत्यर्थः।प्रादेशस्तुप्रदेशस्तुप्रदेशिन्येत्यभिधानोक्तेः।अंगुष्ठप्रदेशिन्योर्विहितत्वात्।प्रमाणप्रादेशोदशांगुलः।तादृशाःषट्प्रा
देशाःप्रमाणम्।षष्ट्यंगुलसार्द्धद्वयहस्तमित्यर्थः२सामवेदस्वरूपमाह।सामवेदोनित्यस्रग्वीस्रजोअस्यसंतीतिस्रग्वी।अस्माय।

मेधास्रजाविति ॥ नित्यं पुष्पमालाधारी ॥ समयत्ननियमवान् सुप्रयतः शुचिः पवित्रः शुचिर्वासाः ॥ शुचिशुद्धेवाससोवस्त्रं यस्य
शुद्धवस्त्रधारी ॥ शमीशमः ॥ शांतिरस्यास्तीति शमीशान्तमनाः । दांतः । नियतवाह्येंद्रियः । बृहच्छरीरः बृहत् महत् शरीरं यस्य सः
। सामीदंडी । शमीतरोर्दंडो यस्य सः ॥ कातरनयनई़क्षनहे नयने नेत्रे यस्य सः । वर्णेन आदित्यवर्णः । आदित्यस्य भानोर्वर्ण इव
वर्णो यस्य सः ॥ नवारत्निमात्रः । नवअरत्निप्रमाणं यस्य सः सार्द्धचतुर्हस्तदीर्घ इत्यर्थः । अथर्ववेदस्वरूपमाह । अथर्ववेदः
। चपुनः । तीक्ष्णः । उग्रः । प्रचंडः । क्रोधी रकामरूपो । कामेन रूपाणि यस्य सः । स्वेच्छारूपधारी । विश्वात्मा विश्वस्यात्मा विश्वस्य क
र्त्ता । स्वशाखउपनिषद्बाहुल्यात् । क्षुद्रकर्मा क्षुद्राणि कर्माणि यस्य सः ॥ अभिचारकृत्याप्रयोजकमन्त्रबाहुल्यात् स्वशाखाध्या
यी । अथर्वणिविशेषः माक्षश्च महानीलोत्पलवर्णेन उत्पलं श्यामकमलं तद्वद्वर्णो यस्य श्यामसुंदरः । दशारत्निमात्रः दश
अरत्नयः प्रमाणं यस्य पंचहस्तप्रमाण इत्यर्थः । अथ वेदानां गोत्रदेवतानां छंदांस्याह । ऋग्वेदस्यात्रेयसगोत्रम् । आत्रेयाः
सगोत्राः समानगोत्रा यस्य तत् । अत्रिगोत्र ऋग्वेद इत्यर्थः । सोमदेवतं सोमदैवत्यं यस्य तत् । गायत्रीछंदः गायत्रीछंदो यस्य त
त् । एवमग्रेपि व्याख्यातव्यम् ॥ अथ यजुर्वेदस्वरूपं । काश्यपगोत्र इन्द्रदैवत्यं त्रिष्टुप्छंदः । काश्यपगोत्रं इन्द्रदैवत्यं त्रिष्टुप्छंदस्को
यजुर्वेद इत्यर्थः ॥ अथ सामवेदस्वरूपं । भरद्वाजगोत्रं रुद्रदैवत्यं जगतीछन्दः । अथर्ववेदस्य वैतानगोत्रं ब्रह्मदैवत्यं अनुष्टुप्छंदः
४ अथ चतुर्वेदस्य फलस्तुतिमाह य इदमिति यः पुमान् इदं वेदानां । नामरूपगोत्रं प्रमाणं छंदो दैवत्यं वर्णं वर्णयति । नामादीनां
द्वंद्वैकवद्भावः । नाम ऋग्वेदादि १ रूपं पद्मपत्राक्षादि २ गोत्रं आत्रेयादि ३ प्रमाणं पंचवितस्त्यादि ४ छन्दो गायत्र्यादि ५ दैवतं सो
मादि ६ वर्णं श्वेतादि च ७ इत्यादि यो जानाति स अविद्यो विद्याहीनः सन् विद्यां लभते प्राप्नोति । जातिस्मरश्च जायते । अथ जन्मांतरे

च॰व्यू॰ जातिर्ज्ञायते पूर्वजातिं स्मरति ॥ जन्मनि जन्मनि प्रतिजन्म वेदपारगो वेदपाठी भवति । अव्रती व्रती भवति अव्रती व्रतहीनोपि व्र
२० तवान् भवति ॥ व्रतफलमाप्नोति ॥ अब्रह्मचारी ब्रह्मचारी भवति ॥ ब्रह्मचर्यहीनोपि ब्रह्मचर्यफलं प्राप्नोतीत्यर्थः ॥ शौनकाचा
र्याय नमः । पद्यावृत्तिः ग्रन्थसमाप्त्यर्थः ॥ श्रवणपठनफलमाह ॥ य इदमिति ॥ यः पुमान् इदं चरणव्यूहं गर्भिणीं स्त्रियं श्रावये
त् सा स्त्री पुमांसं पुरुषलक्षणोपेतं पुत्रं जनयेत् ॥ य इदं चरणव्यूहं श्राद्धकाले पठेत्तत् श्राद्धं पितॄन् प्राप्नोति न पर्यतीत्यर्थः ॥
य इदं चरणव्यूहं प्रत्यहं पठेत् स पंक्तिपावनो भवति ॥ यस्यां द्विजाः पंक्तावासते तां सर्वां पुनातीत्यर्थः ॥ स च पुत्रान् प्रभृती
न् पुत्रादिकान् सप्त च पुनः सप्तवारान् जाद्यादीन् पित्रादींश्च आत्मानं चैवं पंदशपुरुषान् तारयति ॥ य इदं नित्यशः पर्व
सु पर्वसु अष्टमीभूतदर्शपौर्णमासीसंक्रान्तिषु च पठति स धूतपाप्मा धूतो दूरीकृतो पाप्मा पापं येन स एवं शुचिः पवित्रः
सन् ब्रह्मभूयाय ब्रह्मभावाय गच्छति । कर्मणि चेति चतुर्थी । ब्रह्मभावमाप्नोतीत्यर्थः ५ इति चरणव्यूहभाष्ये चतुर्थः खंडः
॥ त्रिदृग्नागधरामिते गतेब्दे मधुमासे दशमीतिथौ सुधांशौ ॥ महिदाससुबुधो परोपकृत्यै चरणव्यूहमिदं व्यकारिकाश्याम्
१ विद्वद्भिः प्रार्थितेनायं महिदासद्विजन्मना ॥ चरणव्यूहवृत्तिश्च विहिता हि मया कृता २ ॥ इति चरणव्यूहः समाप्तः ॥

वाराणसीप्रसादस्य नियोगेन प्रयत्नतः । काशीसंस्कृतमुद्रायां मुद्रितायं शिलाक्षरैः १ ॥ श्रीकाशीजी मुहल्ला हौदकटो राम
रा श्री पुत बाबू वाराणसीप्रसादजी के मकान में काशीसंस्कृतमुद्रायंत्र में छपी जिन्को लेना होय उन्को इस स्थान में २०
श्री बाबू वाराणसीप्रसादजी के पास या कचौरी गली में भाई प्रताप सिंहजी के दुकान पर मिलेगी ॥ श्रीसंवत् १९४२

